## आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| १ गणेशाथर्वशीर्षम्–सभाष्यम् । ... | ० | ६ |
| २ रुद्राध्यायः–सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः। | १ | ६ |
| ३ पुरुषसूक्तम्–सायणभाष्योपेतम् । | ० | ४ |
| ४ योगरत्नाकरः–… | | |
| ५ ईशावास्योपनि… | | |
| ६ केनोपनिषत्–स… | | |
| ७ काठकोपनिषत्… | | |
| ८ प्रश्नोपनिषत्–स… | | |
| ९ मुण्डकोपनिषत्… | | |
| १० माण्डूक्योपनिष… | | |
| ११ ऐतरेयोपनिषत्–… | | |
| १२ तैत्तिरीयोपनिष… | | |
| १३ तैत्तिरीयोपनिष… | | |
| १४ छान्दोग्योपनिष… | | |
| १५ बृहदारण्यकोपनिषत्–सटीकशांकरभाष्योपेता । ... | ८ | ० |
| १६ बृहदारण्यकोपनिषद्भाष्यवार्तिकम्–भागत्रयात्मकम् । | २२ | ८ |
| १७ श्वेताश्वतरोपनिषत्–भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ सौरपुराणम्–श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ रसरत्नसमुच्चयः–श्रीमद्वाग्भटाचार्यविरचितः। वैद्यकग्रन्थः । | ३ | १२ |
| २० जीवन्मुक्तिविवेकः–विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ ब्रह्मसूत्राणि–सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ श्रीमच्छंकरदिग्विजयः–विद्यारण्यकृतः। टीकाटिप्पणीभ्यांसहितः। | ६ | ० |
| २३ वैयासिकन्यायमालाविस्तरः–भारतीतीर्थमुनिप्रणीतः । | १ | १२ |
| २४ जैमिनीयन्यायमालाविस्तरः–श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ सूतसंहिता–माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ हस्त्यायुर्वेदः–पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ वृन्दमाधवः–श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ ब्रह्मपुराणम्–श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |

| ग्रन्थनाम । | मूल्यम् रू० | आ० |
|---|---|---|
| २९ उपनिषदां समुच्चयः-श्रीनारायणशंकरानन्दकृतदीपिकासहितः | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्-भाष्याद्युपेता । ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा-श्रीनित्यानन्दमुनिविरचिता । | १ | १२ |
| ३२ ऐतरेयब्राह्मणम्-सायणभाष्यसमेतम् । भागद्वयात्मकम् । | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः-श्रीधन्वन्तरिविरचितः । वैद्यकग्रन्थः । | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता-शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता-सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ संगीतरत्नाकरः-शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम्। | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्-सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्-सायणभाष्यसमेतं भागत्रयात्मकम् । | १४ | ८ |
| ३८ ऐतरेयारण्यकम्-सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ संस्काररत्नमाला-गोपीनाथभट्टविरचिता । भागद्वयात्मिका । | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः-खण्डराजश्रीकृष्णपण्डितादिप्रणीतः । | २ | ० |
| ४१ अग्निपुराणम्-महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ५ | ४ |
| ४२ तैत्तिरीयसंहिता-सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः-भट्टोजीदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ श्रीमद्भगवद्गीता-पैशाचभाष्यसमेता । . . | १ | ८ |
| ४५ श्रीमद्भगवद्गीता-मधुसूदनश्रीधरकृतटीकोपेता । ... | ५ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः अपरार्ककृतटीकासहिता भागद्वयात्मिका । | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि-भाष्यवृत्तिभ्यां समेतानि । . . | ३ | ० |
| ४८ स्मृतीनां समुच्चयः-अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्-महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका-श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः-माधवाचार्यप्रणीतः । . . ... | २ | ० |
| ५२ श्रीमद्गणेशगीता-नीलकण्ठकृतटीकोपेता । ... ... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्-सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्-श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम् । | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः-आठवलेइत्युपाह्वविष्णुभट्टकृतः । | ४ | ० |
| ५६ नित्याषोडशिकार्णवः-भास्कररायोन्नीतटीकासहितः । | ३ | ८ |

| ग्रन्थनाम। | | मूल्यम् रू० |
|---|---|---|
| ५७ | आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम्। | ४ |
| ५८ | आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः। ... | ४ |
| ५९ | श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता। ... | २ |
| ६० | यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः। ... | १ |
| ६१ | गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम्। ... | २ |
| ६२ | ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ |
| ६३ | छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। | ३ |
| ६४ | बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। | ३ |
| ६५ | शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम्। | १ |
| ६६ | काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः। ... ... | ६ |
| ६७ | ब्रह्मसूत्राणि—दीपिकासमेतानि। ... ... ... | ४ |
| ६८ | बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता। ... ... | १ |
| ६९ | ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम्। तन्त्रशास्त्रग्रन्थः। ... | १ |
| ७० | स्मृत्यर्थसारः—श्रीधराचार्यविरचितः।... ... ... | १ |
| ७१ | बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता। | १० |
| ७२ | परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः। ... | २ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता।... | १ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता। ... ... | १ |
| ७५ | ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता। ... | ४ |
| ७६ | ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः। | १ |
| ७७ | वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचितः। ... | २ |
| ७८ | त्रिस्थलीसेतुः—नारायणभट्टविरचितः।... ... ... | ३ |
| ७९ | छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता।... ... | २ |
| ८० | वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका।... ... | ० |
| ८१ | आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम्। ... | ४ |
| ८२ | ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता। ... ... ... | २ |
| ८३ | संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम्। ... | ९ |
| ८४ | अद्वैतामोदः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः। | २ |
| ८५ | ज्योतिर्निबन्धः—पूरमहाठश्रीशिवराजविरचितः। ... | ३ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १११

श्री० म० म० विद्वद्रत्न-अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता

# कायपरिशुद्धिः ।

सेयं

वे० शा० सं० रा० मारुलकरोपाह्वैः शंकरशास्त्रिभिः

संशोधिता ।

एतत्पुस्तकं

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८६१ ।

खिस्ताब्दाः १९३९ ।



मूल्यं सपाद एको रूपकः ( १॥४ )।

# कायपरिशुद्धेर्भूमिका ।

पायादपायाज्जगदीश्वरो नः ।

तत्त्वमसि ( छा. ६।८।७ ) अहं ब्रह्मास्मि ( बृ. १।४।१० ) सर्वं खल्विदं ब्रह्म ( छा. ३।१४।१ ) इदं सर्वं यदयमात्मा ( बृ. २।४।५ ) मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ( गौ. का. १७ ) ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः, इत्यादीनि परःशतानि श्रुतिशिरोवचनान्यभियुक्तोक्तस्मृतिवचांसि चोच्चावचानि प्रस्थानत्रयपरिमण्डितायां ब्रह्ममीमांसायामद्वैतमधिकृत्य प्रवृत्तानीति जोघुष्यते सर्वैरप्यद्वयब्रह्ममीमांसाशास्त्राभियुक्ततमैः । अखिलाद्वैतसंप्रदायप्रवर्तकाचार्यवर्यसमयासिद्धोऽयं राद्धान्तो यत्सर्वासां श्रुतीनां स्वरसतः परमतात्पर्यं जीवब्रह्मणोरभेदे जगद्ब्रह्मणोरभेद एव चेति । तादृशपरमरहस्यभूतसिद्धान्तप्रस्थापनेऽतिमात्रं प्रयतितं विविधाभिर्विधाभिर्नैकविधशब्दजालजटिलेषु नैकविधसुदूरदुरूहतर्ककर्कशेषु भामत्यद्वैतसिद्धिप्रभृतिषु वादग्रन्थेषु नवनवोन्मेषशालिप्रज्ञामण्डितैर्नैकविधतर्करचनाचतुरैर्गुरूपासनासमादितप्रज्ञाविभवैरधरीकृतसुरगुरुभिरखण्डितपण्डितैः । अधिकरणरत्नाङ्कुरच्छुरिते शारीरकेऽपि हृदयंगमया सरण्या सुष्ठूपपादितमिदं श्रुतिशिरःपरमरहस्यं तत्तदवान्तरमतमतान्तरनिरसनपुरःसरम् ।

परमपुरुषार्थो मोक्षश्च तादृगद्वयात्मज्ञानादेवेति प्रसिद्धो डिण्डिमः । तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था अयनाय विद्यते ( श्वे. ३।८ ) इति श्रुतेः । पूर्णानन्दाद्वितीयब्रह्मपरिज्ञानादेव मृत्योरतिक्रमणं मोक्षं प्राप्नोतीति तदर्थः ।

ननु तमेव विदित्वेत्यत्रैवकारस्य तंपदेनैवान्वयो नतु ज्ञानपदेन । तदिदं श्रुतौ तंशब्दोत्तरमेवैवकारपाठेनावगम्यते । तथा चाऽऽत्मन एव ज्ञानान्मोक्षो नत्वात्मव्यतिरिक्तज्ञानादित्यर्थप्रतीतेरात्मेतरविषयकत्वमेव मोक्षसाधनीभूतज्ञानस्य निरसिसिषितं प्रतीयते । नतु विदित्वैवेत्यन्वयेन कर्मादिसाधनान्तरसहकारः पर्युदस्यते ज्ञानस्य । विदित्वेत्यनन्तरमेवकारपाठाभावात् । अन्यथाऽहमस्मीत्येवमहमर्थस्याऽऽत्मनः प्रतीतेः सर्वानुभवसिद्धत्वेनाहं सुखीत्यादिज्ञानस्याप्यात्मविषयकत्वेन मोक्षहेतुत्वापत्तेः । तथा च 'ज्ञानादेव तु कैवल्यम्' इत्युक्तं कैवल्यापरपर्यायमोक्षस्य ज्ञानमात्रसाध्यत्वं नैव श्रुतिसिद्धमिति चेन्नैतद्भद्रम् ।

नान्यः पन्था इत्यग्रिमवाक्य एवकारव्यावर्त्यत्वेन मोक्षे साधनान्तरप्रतिषेधप्रदर्शनात्तदनुरोधेनैवकारस्य भिन्नक्रमत्वं स्वीकृत्य विदित्वेत्यनन्तरमानीय विदित्वैवेत्येवमन्वयस्यावश्यमङ्गीकरणीयतया ज्ञानैकसाध्यत्वं मोक्षस्य श्रुतिसिद्धमेवेत्याशयात् ।

पुरुषार्थे मोक्षे परमत्वं च निःशेषदुःखोपशमलक्षितत्वं परमानन्दैकरस्यत्वं च । दुःखमूलं च मूलाज्ञानापरपर्यायाऽविद्यैव । अविद्यैव हि कर्तृत्वादिसकलानर्थकरी । यथासावविद्याशब्दार्थः स एव संसार इत्युच्यते । संसार इत्यत्र समित्येकीकरणे । संभेद इत्यादौ तथाऽर्थोपलम्भात् । तथा चाऽऽत्मानं देहेनैकीकृत्य स्वर्गनरकमार्गयोः संसरति पुरुषो येन स संसारः । समुपसृष्टात्सृधातोः करणे घञ्प्रत्ययः । तादृशसंसारस्य, आत्मज्ञानान्मोक्षं दर्शयन्ती ' तरति शोकमात्मवित् ' ( छा० ७ । १ । ३ ) इति च्छान्दोग्यश्रुतिर्निवृत्तिं सूचयति । संसारनिवृत्तिमन्तरेण मोक्षस्यासंभवात् ।

ननु ' अपाम सोममृता अभूम ' ' हिरण्यदा अमृतत्वं भजन्ते ' इत्यादिश्रुतिषु सोमपानाद्युपलक्षितकर्मसाध्यत्वममृतत्वस्य प्रतिपाद्यते । तमेव विदित्वेत्यनया तु ज्ञानेन मोक्षसिद्धिरभिधीयते । तत्र श्रुतिद्वयविरोधे सति द्वयोः प्रामाण्याय विकल्पस्याष्टदोषदुष्टत्वेनासंभवात्समुच्चयस्यैवाऽऽश्रयणं युक्तमिति कर्मसमुच्चितस्यैव ज्ञानस्य मोक्षसाधनत्वमूरीकर्तव्यम् । नहि कर्मणा न मोक्षः किंतु ज्ञानेनैवेत्यत्र राज्ञोऽनुशासनमस्ति येन तमेवेतीयमेव श्रुतिः पुरस्क्रियते नापामितीति चेत् ।

अत्रोच्यते–ज्ञानमेव ह्यज्ञानं निवर्तयतीति लोके नियमो दृश्यत इत्यविद्याविद्ययोरेव हि निवर्त्यनिवर्तकभावनियमो लोकसिद्धो नत्वविद्याकर्मणोः । नहि रज्जुसर्पादिभ्रमस्य तत्प्रयुक्तभयकम्पादेश्च निवृत्तिः कर्मविशेषानुष्ठानेन भवतीत्येवमनुभूयते । किंतु रज्जुतत्त्वपरिज्ञानेनैवेति सर्वानुभवारूढम् । तथा च लोकसिद्धेनाविद्याया ज्ञानैकनिवर्त्यत्वनियमेनोपोद्बलिता ' तमेव ' इति श्रुतिरेव प्रबलेति न ज्ञानस्य कर्मसमुच्चितत्वं शङ्कितुमप्यर्हम् । एवं च पूर्णानन्दाद्वितीयात्मविषयकाविद्यानिवृत्तिरेव मोक्ष इति पर्यवस्यति । तथा चोक्तं सर्वदर्शनसंग्रहे विद्यारण्याचार्यैः–अविद्यास्तमयो मोक्षः, इति ।

ननु च 'ब्रह्मविद्ब्रह्मैव भवति' ( मु० ३ । २ । ९ ) इति ब्रह्मविदो ब्रह्मप्राप्तिरुच्यते । ब्रह्म च ' आनन्दो ब्रह्मेति व्यजानात् ' ( तै० ३ । ६ )

विज्ञानमानन्दं ब्रह्म ( बृ० ३ । ९ । २८ ) इत्यादिश्रुतेः परमानन्दस्वरूपम् । तथा च निरतिशयानन्दाविर्भावो मोक्ष इति सिध्यतीति कथमिवाविद्यानिवृत्तिर्मोक्ष इत्युच्यत इति चेत्सत्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१।१) अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा ( बृ० ४ । ३ । २३ ) इत्यादिश्रुतेः सच्चिदानन्दस्वरूपस्य ब्रह्मण आत्यन्तिकनित्यत्वावगमादविद्यानिवृत्तेः प्रागप्यानन्दाविर्भावसत्त्वात्प्रतिबन्धकाविद्यानिवृत्तौ भस्मापसारणे तदन्तर्गताग्नेः प्रकाशाविर्भाववदानन्दाविर्भावस्य जायमानत्वेनाविद्यानिवृत्तेरपि मोक्षत्वाङ्गीकार इत्याशयादिति गृहाण । एवं स्थितेऽनेन प्रघट्टकेनैतत्सिध्यति यदद्वैतमार्गेणैव मोक्षो लभ्यो नान्येन कर्मादिना द्वैतमार्गेणेति ।

तस्यास्याद्वैतमार्गस्य प्राप्तेरुपायस्य जिज्ञासाकाङ्क्षायां सर्वतः प्रामुख्येणाऽऽदौ कायपरिशुद्धिरेव बुद्धावारोहति । यद्यप्यद्वैतमार्गप्राप्तिसाधनत्वेनोद्गीथप्राणाग्निहोत्रदहरपञ्चाग्निप्रभृतयोऽनेका विद्याः समुपदिष्टाश्छान्दोग्यादिषूपनिषत्सु, प्रपञ्चिताश्च ब्रह्मसूत्रतद्भाष्यादौ तथाऽपि नैव ताः स्वातन्त्र्येण स्वकार्यं साधयितुं शक्नुवन्त्यपि तु तत्र कायपरिशुद्धेर्मुखमीक्षन्त एव । यतोऽशुद्धयवस्थायां कृतं कर्म नार्थमावहेत् । सूचितश्चायमर्थः 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्' ( पा० सू० १ । १ । १ भाष्यं ) इत्येकस्यापि वर्णस्यानर्थकत्वाभावे सूत्रप्रणेतुराचार्यस्य पाणिनेः पवित्रपाणित्वं शुचिप्रदेशे प्राङ्मुखोपवेशनं च हेतुं वदता व्याकरणमहाभाष्यकारेण पतञ्जलिनाऽऽचार्येण । अन्यथाऽऽचार्यविशेषणस्य पवित्रपाणित्वादेरुपादानेन किं कृतं स्यात् । 'शुचिना कर्तव्यम्' 'सबाह्याभ्यन्तरः शुचिः' 'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इत्येवमादीन्यपि नैकशः शुचित्वोपदेशकवाक्यानि पदे पदेऽस्मच्छास्त्रेषु समुपलभ्यमानान्यनारभ्याधीतत्वात्सर्वेष्वारम्भेषु कायपरिशुद्धेरावश्यकत्वं प्रतिपादयन्ति ।

नन्वस्तूक्तरीत्या कायपरिशुद्धेरद्वैतमार्गोपलब्धिसाधनत्वं किंतु के ते कायाः कीदृशं तेषां स्वरूपं कीदृक्षा च सा शुद्धिः कीदृश्या चेतिकर्तव्यतया सा संपादनीया तया चाग्रे किं साधनीयम्, इत्येवंप्रायाः प्रश्नाः पुरतः समुत्तिष्ठन्ते । सत्यम् । एतदर्थमेव ह्ययं निबन्धो म. म. विद्वद्रत्न—अभ्यंकरोपाह्ववासुदेवशास्त्रिभिः स्वातन्त्र्येण निबद्धः । तत्र तदेतत्सर्वं साङ्गोपाङ्गं विवेचितम् । अत

एव चास्य ग्रन्थस्य कायपरिशुद्धिरित्यन्वर्थं नाम कृतम्। कायस्य परिशुद्धिरिति व्युत्पत्त्या देहशुद्धिस्तदर्थोऽवगतो भवति। देहश्च त्रिविधः। स्थूलसूक्ष्मकारणभेदात्। तत्र पञ्चीकृतपञ्चमहाभूतसंभवः प्रत्यक्षतो दृश्यमानः करचरणादिमान् स्थूलो देहः।

तदुक्तं—स्यात्पञ्चीकृतभूतोत्थो देहः स्थूलः ( प० द० १। ३४ ) इति।

ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणपञ्चकं मनो बुद्धिश्चेत्येतैर्मिलितः सप्तदशावयवः सूक्ष्मो देहः। अयमेव लिङ्गदेह इत्युच्यते। तदुक्तं पञ्चदश्याम्—

बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते ॥ ( प० द० १। २३ ) इति।

कारणदेहस्तु—मलिनसत्त्वप्रधानाऽविद्यैव। तदप्युक्तं पञ्चदश्याम्——
सा कारणशरीरं स्यात् ( प० द० १। १६ ) इति।

साऽविद्या स्थूलसूक्ष्मशरीरादिकारणभूतं प्रकृत्यवस्थाविशेषत्वात्कारणशरीरं स्यादिति तदर्थस्तट्टीकायामुक्तः।

तस्य कायस्य शुद्धिर्नाम दोषराहित्यम्। स्थूलदेहे दोषश्च वातपित्तकफवैषम्यकृतो ज्वरादिः। तन्नाशकं वैद्यकं शास्त्रम्। लिङ्गदेहगतदोषाणां कामक्रोधमदमोहादीनां शुद्धिसंपादकं पूर्वमीमांसाशास्त्रम्। कारणदेहगतमूलाविद्यारूपदोषनाशनार्थं वेदान्तशास्त्रमिति तत्तदुपायेन तत्तत्कायस्य शुद्धिः संपादनीयेति तात्पर्यम्।

येयं कायपरिशुद्धिरुक्ता सा द्विविधा। सर्वांशेन पूर्णा, केनचिदंशेन विकला च। तत्राऽऽद्या मोक्षप्राप्तयेऽत्यन्तमावश्यकी। द्वितीया व्यवहारे सर्वत्रैवापेक्ष्यते। न केवलं वैदिकव्यवहार एव कायपरिशुद्धेरपेक्षा विभावनीया। किंतु लौकिकव्यवहारोऽपि तत्तत्कर्मानुगुणां कायपरिशुद्धिमपेक्षत एव। अन्यथा तु जायमानो द्विविधोऽपि व्यवहारः स्वरूपमात्रपर्यवसायी भवति। तत्र श्रौतेषु स्मार्तेषु च शास्त्रीयकर्मसु यदि तत्तत्कर्मानुगुणा मानसी शुद्धिर्न स्याच्चेत्तत्कर्म जातमित्येव। तादृशकर्मकारिणं च केवलमयं सोमयाजीत्यादिशब्देन लोकाः संबोधयेयुर्न पुनः स कर्मकारी तादृशकर्मप्राप्यमैहिकं पारलौकिकं वा फलं कार्त्स्न्येनावाप्नोति। लौकिके व्यवहारेऽपि यो देवदत्तादिर्येन चैत्रादिना सह प्रत्यक्षं सख्येन व्यवहरति तस्य देवदत्तादेस्तादृशचैत्रादिविषयको मानसो भावः शुद्धो

न चेत्स चैत्रादिरपि तादृशेन तेन देवदत्तादिना साकं व्यवहरन् बहिरेव केवलं सख्यं प्रदर्शयति । अन्ततो देवदत्तादेर्भावं सत्यतया जानानोऽपि तत्समक्षं लेशतोऽपि स्वकीयां वाचं तदीयदोषोच्चारणेन नाऽऽसञ्जयति । यथा चोक्तम्—

दोषज्ञा अपि लोकाः परदोषोच्चारणे मुनिव्रतिनः ।
हेतुविशेषाभावे प्रत्यक्षं कमपि कोऽपि नाऽऽक्षिपति ॥ इति ।

ये तु स्वभावत एव कुटिला मूर्खास्ते तु नैवम् । तदप्युक्तम्—

सहजान्धदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ इति ।

तथा च ते प्रत्यक्षमपि परकीयदोषमुद्गिरन्तीत्यन्यदेतत् । तदेवं स्वभावभेदेन प्रत्यक्षतः परकीयदोषोद्घाटनं भवतु मा वा भूत्सर्वथा सर्वत्र कायपरिशुद्धिरपेक्ष्यत एवेति निर्विवादम् । भगवद्गीतामपि षोडशेऽध्याये—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ (गी.१६।२३)

इत्यत्र भगवता सिद्धिशब्देन कायपरिशुद्धिः संगृहीता भवति ।

अथात्र प्रसङ्गादस्य श्लोकस्यार्थं प्रथमतः प्रदर्श्य ततः प्रकृतमनुसरामः। परा गतिर्मोक्षः । अत्र सुखापेक्षया परां गतिमिति मोक्षस्य पृथङ्निर्देशान्मोक्षे सुखं नास्तीति ध्वन्यते । एतेन ' मोक्षे निरुपमं सुखम् ' इत्येवं द्वैतिभिर्या मोक्षस्य सुखस्वरूपता प्रतिपादिता सा निरस्ता भवति । नन्वत्र सुखशब्देन सातिशयं सुखं गृह्यते । परगतिशब्देन च निरतिशयं मोक्षसुखं गृह्यत इति गीतावचनसंगतिरिति चेत्—उपपत्तिरेषा ननु ' मोक्षे निरुपमं सुखम् ' इत्यत्रेदं गीतावचनं प्रमाणं भवति । अद्वैतिनां मते तु मोक्षे सुखाभाव इत्यत्रायं पृथङ्निर्देशः प्रमाणं भवति । किंच सातिशयनिरतिशयरूपेण सुखभेद औपाधिकः, देवदत्तयज्ञदत्तादिभेदेन तत्तत्सुखभेदवत् । नतु स्वरूपतो भेदोऽयम् । तथा च स्वरूपभेदाभावेन पृथङ्निर्देशो नैव सामीचीन्येन संगतो भवति । तथा च सुखमिति सामान्यनिर्देशात्तेन सुखशब्देन सातिशयं सुखं गृह्यत इति सुखविशेषग्रहणे प्रमाणाभावः ।

ननु परां गतिमिति शब्देन निरातिशयसुखग्रहणं तत्र प्रमाणमिति चेत्तत्रापि प्रमाणान्तरापेक्षा वर्तत एव । सुखशब्देन सातिशयसुखग्रहणे सिद्धे सति हि

परगतिशब्देन निरतिशयसुखग्रहणम्, परगतिशब्देन च निरतिशयसुखग्रहणे सिद्धे सति सुखशब्देन सातिशयसुखग्रहणमित्यन्योन्याश्रयः। तथा च द्वैतिनामभिमतं मोक्षस्वरूपं नैव संभवति। किंच द्वैत्यभिमतं मोक्षस्वरूपं श्रुतिविरुद्धम्। यतो न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः (छा. ८।१२।१) इति श्रुतौ मोक्षस्वरूपमशरीरमभिहितम्।

यत्तु शरीरपदेन लौकिकं शरीरं गृह्यते नतु दिव्यं मोक्षकालिकम्। तथा प्रियाप्रियपदाभ्यामपि लौकिकप्रियाप्रिययोर्ग्रहणमिति द्वैतिभिः प्रकल्पितं तन्न स्वारसिकम्। किंतु कथंचिच्छ्रुतेरुपपत्तिरेवेति न तत्र विश्वसनीयं भवति। तदुक्तमभियुक्तैः—

विशेषे वक्तृतात्पर्यं न चेत्सिद्धं प्रमाणतः।
सामान्येन विशेषोऽर्थो न क्वचिद्ग्राह्यताम्रियात्॥ इति।

शास्त्रविध्यतिक्रमः कामकारद्वारा सिद्धि–सुख–परगतिप्रतिबन्धक इत्यस्मादेव गीतावचनादवगम्यते। शास्त्रविध्यतिक्रमः शास्त्रविधिपरित्यागः कामकारश्च यथेच्छं वर्तनं सुरापानमांसभक्षणपरदारगमनादिकम्। तत्र शास्त्रविध्यतिक्रमः कारणं कामकारश्च तत्कार्यमित्यनयोर्यः कार्यकारणभावः स पूर्वकालबोधकोत्सृज्येति क्त्वाप्रत्ययेन द्योतितः। शास्त्रविध्यतिक्रमश्चाऽऽभ्यन्तरो मानसिको बाह्यश्च सुरापानादिः प्रात्यक्षिकश्चेति द्विविधः। तत्र यदि प्रात्यक्षिकः शास्त्रविध्यतिक्रमो गृह्यते तर्हि तदेव यथेच्छं वर्तनमित्युत्सृज्येति पूर्वकालिकत्वाप्रत्ययो न संगच्छते। अत आन्तर एव शास्त्रविध्यतिक्रमो ग्राह्यो भवति। युज्यते चैतत्। आन्तरं हि बाह्यस्य कारणं भवति। न तु बाह्यमान्तरस्य कारणम्। बाह्यं त्वान्तरस्य केवलं द्योतकं भवति। बाह्यं सुरापानादिकं कर्मेन्द्रियसाध्यम्। इन्द्रियाणि च सर्वाणि मनोधीनानीति यदा मन इन्द्रियाणि प्रेरयेत्तदैवेन्द्रियाणि बहिः कर्म कर्तुं शक्नुवन्ति। मनश्च तदैवेन्द्रियाणि प्रेरयेद्यदा तत्कर्म मनसि स्यात्। यदि च मनसि तादृशं कर्म न स्यात्तर्हि नैव मनो बाह्यं कर्म कर्तुमिन्द्रियाणि प्रेरयति। प्रेरणाभावे च नैवेन्द्रियाणि कर्म कुर्वन्ति। अत एव नास्तिकानां संध्यावन्दनाद्यान्तरं न भवतीति न बहिस्तैरनुष्ठीयते। आस्तिकानां च तदान्तरं भवतीति बहिरपि तैस्तदनुष्ठीयत इत्यनुभूयते लोके। अत आन्तरमेव बाह्यस्य कारणमिति नियमः सिध्यति। तादृशनियमानुरोधादप्यान्तर

एव शास्त्रविध्यतिक्रमो ग्राह्यो भवति । बाह्यस्य शास्त्रविध्यतिक्रमस्य सुरापानादेः क्रियारूपत्वाज्ज्ञानेच्छाक्रियाणां च क्रमिकत्वस्य प्रसिद्धत्वात्तादृशक्रियापेक्षया प्राग्वर्तिनी या तादृशेच्छा तद्विषयीभूतो यः शास्त्रविध्यतिक्रमः स आन्तर इति ज्ञेयम् । तथा च यः शास्त्रविधिं मनसाऽतिक्रम्य बहिः सुरापानादिकं यथेच्छं वर्तनं करोति स सिद्धिं सुखं परां गतिं च नाऽऽप्नोतीति श्लोकार्थः ।

नन्वेवमस्तूक्तरीत्या यः शास्त्रविधिं मनसाऽतिक्रामति बहिरपि च प्रात्यक्षिकं पारदार्यादिकमाचरति तस्य सिद्ध्यादिकं नास्तीति निश्चप्रचम् । किंतु यस्य शास्त्रविध्यतिक्रमः केवलं मानसिक एव । बाह्यतः क्रिया तु सर्वा शास्त्रविध्यनुसारिण्येव । पितृपितामहादिपरम्पराप्राप्तसंप्रदायसमुत्सर्गे साहसाभावात् । केवलं तत्र विहितं कर्म कश्चिद्यथाकालं करोति कश्चित्त्वालस्यादिना कालातिक्रमेण करोतीत्यन्यत् । तादृशस्य तस्य सिद्धिर्भवति न वेति सुतरां संदेग्धि नश्चेतः ।

तत्र सिद्धिर्भवतीति चेद्ब्रूषे हन्त शास्त्रविरुद्धयाऽपि मनोवृत्त्या किं कृतं स्यात् । न किमपि लोमकौटिल्यमपि कृतं भवति । अथ वाक्षि न सिद्धिर्भवतीति चेत्तर्हि यः शास्त्रविधिमुत्सृज्येत्येकमेव कारणं सिद्ध्यभावे पर्यवसन्नं नतु कामकारवर्तनमपि तत्र कारणमिति यः शास्त्रविधिमुत्सृज्येत्येतावतैव सिद्धे 'वर्तते कामकारतः' इति द्वितीयचरणस्य न किमपि प्रयोजनं संदृश्यत इति चेत् ।

अत्रोच्यते—यस्य शास्त्रविध्यतिक्रमः केवलं मानसिकस्तस्य तादृशी मनोवृत्तिः पूर्वसंस्कारानुरोधेन वर्धिष्णुः क्षयिष्णुर्वा जायते । वर्धिष्णुश्चेद्बहिः सुरापानादिकमपि स्यादिति स सन्मार्गबहिर्भूत एव भवति । न स सिद्धिमवाप्नोति । तादृश्या मनोवृत्तेः क्षयिष्णुत्वे तु क्षयपर्यन्तं विलम्बः पश्चात्स सन्मार्गगामी स्यादेवेति स सिद्धिमाप्नुयात् । तथा च यः शास्त्रविध्यतिक्रमः कामकारवर्तनसहकृतः स एव सिद्धिप्रतिबन्धको नतु कामकारवर्तनासहकृत इति बोधयितुं 'वर्तते कामकारतः' इति द्वितीयचरणः सार्थकः । कामकारवर्तनं च मानसिकं बाह्यं चेति द्विविधम् । सुरापानादियथेच्छाचरणविषयकं प्रेम मानसिकम् । बाह्यं तु प्रसिद्धमेव । तादृशद्विविधकामकारवर्तनसहकृतः शास्त्रविध्यतिक्रमो यां प्रतिबध्नाति यस्याश्च प्रतिबन्धे न कर्मादिद्वैतमार्गसाध्यं स्वर्गादिसुखं नाप्यात्मैक्यविज्ञानाद्वैतमार्गसाध्यं परगतिशब्दवाच्यं मोक्षसुखं च लब्धुं शक्यं सा सिद्धिः कीदृशीति तत्स्वरूपे पृष्टे कायपरिशुद्धिमन्तरेण किमुत्तरं दद्यादुत्तरयिता । नान्यत्किमप्यपि तु कायपरिशु-

द्धिमेवोत्तरयोरित्यर्थः। युक्तं चैतत्। शास्त्रविध्यतिक्रमपूर्वकद्विविधकामकारवर्तनेनाऽऽदावेवाशुद्धः कायः पुनरधिकतरामेवाशुद्धिं नीत इति स्पष्टमेव। ततश्च कामकारवर्तनेन हेतुना 'न स सिद्धिमवाप्नोति' इति यः सिद्ध्यभाव उक्तो भगवता स कीदृगिति वीक्षायां कायपरिशुद्ध्यभावस्वरूप एवेति स्पष्टमेव प्रतीयते। अर्थात्सिद्धिरपि कायपरिशुद्धिस्वरूपैवेत्योर्थेनैव संप्राप्तम्। तस्याः कायपरिशुद्धेरभावेऽशुद्धयवस्थायां कृतं कर्म फलाभिसंधिसहितं फलाभिसंधिरहितं वा न द्वैतमार्गे नाप्यद्वैतमार्गे जनयितुमलं भवेदिति युक्तमुक्तं कायपरिशुद्धेरभावे 'न सुखं न परां गतिम्' इति। एवं च यः शास्त्रविधिमुत्सृज्येति गीतावचनस्थसिद्धिपदेन कायपरिशुद्धिरेव भगवताऽभिप्रेयत इति स्पष्टमेव लभ्यते। इतोऽप्यधिकविस्तरेण जिज्ञासायामेकवारमपि कायपरिशुद्धिरामूलाग्रं पर्यालोचनीयेति प्रशस्ते। ईदृशं निरुपमं हृदयंगमया सरण्याऽऽनायासतस्तत्त्वार्थावबोधकममुं ग्रन्थं सग्राह्य समालोच्य च स्वीयस्वीयत्रिविधकायपरिशुद्धिं भावयन्तु सर्वे जनाः स्पृहयन्तु च निरातिशयानन्दायेति श्रीपरमेश्वरं सच्चिदानन्दं संप्रार्थ्य विरमति—

पुण्यपत्तने श्रावणशुक्लतृतीयायां गुरुवासरे
श० १८६१

आनन्दाश्रमस्थप्रधानग्रन्थावलीसंशोधनाधिकृतः
मारुलकरोपाह्वः शंकरशास्त्री—भारद्वाजः।

# अथ कायपरिशुद्धिविषयाणामनुक्रमणिका ।

इति कायपरिशुद्धिविषयाणामनुक्रमणिका ।



ॐ तत्सद्ब्रह्मणे नमः ।

# श्री. म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीता

# कायपरिशुद्धिः ।

ध्यात्वा महापुरुषमात्मनि संवसन्तं दृष्ट्यैव दोषगणमाशु विनाशयन्तम् ।
कायांश्च दोषबहुलाननुविलोच्य नृणां ग्रथ्नामि कायपरिशुद्धिमिमां तदर्थम् ॥१॥
आरोग्यशास्त्रमिति यज्जगति प्रसिद्धं तस्य स्वरूपमिह नोद्धियते कथंचित् ।
सूक्ष्मेक्षिकां हृदि निधाय कृतः प्रयत्नः साफल्यमेतु सुधियामवलोकनेन ॥२॥
येषां कुमार्गपरिशीलनबद्धभावा प्रायो मतिः परिजिहासति साधुमार्गम् ।
ते कायशुद्धिमतुलां यदि साधयेयुर्नूनं जरामरणबन्धभयं त्यजेयुः ॥ ३ ॥

इह खलु सर्वोऽपि जन्तुः पुरुषार्थसिद्ध्यै प्रयतत इति प्रसिद्धमेव । तत्र परमपुरुषार्थो मोक्षश्चाऽऽत्मस्वरूपज्ञानादेवेति श्रुतौ डिण्डिमः । 'विज्ञानं ब्रह्म' ( छा. ७ । ७ । २, बृ. ३ । ९ । २८ ) इति श्रुतितो ज्ञानस्वभाव आत्मेति निश्चीयते । अत एव च सृष्टिप्रलयौ पुनःपुनर्भवतः । सृष्टिप्रलययोर्ज्ञानैकसाध्यत्वात् । तज्ज्ञानं च प्रथमतो लोकसृष्टीक्षणमेव । तदुक्तम्— ' आत्मा वा इदमेक एवाग्र आसीत्० स ऐक्षत लोकान्नु सृजे ' ( ऐ. १।१ ) इति । संकल्पिता चेयं लोकसृष्टिर्न स्वस्माद्भेदेन । श्रुत्यन्तरे ' बहु स्यां प्रजायेय '( तै. २ । ६ । १ )इत्येवं संकल्पाकारप्रदर्शनेनाभेदावगमात् । नन्वयमभेदः कथमुपपद्यत इति चेत् । इत्थम्— संकल्पकाले चायमात्माऽनाद्यज्ञानाश्रयो भूत्वा तादृशाज्ञानोपाधिमत्त्वेन रूपेण संकल्पयति । तथा च यथा वेषविशिष्टो नटो बाह्यवेषपरिवर्तनमात्रेण ' अहं नटी भवामि ' इति संकल्पयति तथेहाप्यज्ञानपरिणाममात्रेण ' अहं बहु स्याम् ' इति संकल्प उपपद्यते । इत्थमेव च द्विविधसंकल्पाकारप्रदर्शकयोः श्रुत्योरेकवाक्यता संपद्यते । अत एव चेदमद्वैतदर्शनं श्रौतमिति गीयते । यद्यपि सा ज्ञानशक्तिरात्मस्वरूपैव तथाऽपि तस्याः सकाशात्स्वयं भिन्न इव तस्या आश्रयो विषयश्च भूत्वा लोकसृष्टिं निरीक्षितवानिति श्रुतितात्पर्यम् । यथा गर्भागारमन्धकारस्याऽऽश्रयो विषयश्च भवति तद्वत् । एक एवाग्र आसीदिति श्रुतौ द्वितीयनिषेधस्य स्पष्टमेवोक्तत्वादात्मैव ज्ञानविषय उक्तः । आश्रयविषययोर्भेद आवश्यक एवेति

१ टी० ' आत्मनि संवसन्तम् ' इत्यनेन ' तमात्मस्थम् ' (का. ५ । १२) इति श्रुतिरर्थत उपनिबद्धा ।

नियमस्तु वक्तुमशक्यः। देवदत्त आत्मानं जानातीत्यादौ व्यभिचारात्। ननु तत्र विषयतावच्छेदकं शरीराद्युपाधिमत्त्वमाश्रयतावच्छेदकं त्वन्तःकरणोपाधिमत्त्वमिति रूपभेदोऽस्त्येवेति चेत्—इहाप्यविद्योपाधिमत्त्वमाश्रयतावच्छेदकमविद्याविशिष्टत्वं च विषयतावच्छेदकमिति रूपभेदोऽस्त्येव। अनाद्यविद्यासंनिधानमात्रेणाऽऽश्रयस्तद्विशिष्टश्च विषय इति यावत्। कारणत्वं च न निमित्तकारणत्वं केवलम्। किंतूपादानकारणत्वमपि। एक एवाग्र आसीदिति श्रुतावन्यस्य निषेधेनोपादानकारणस्यान्यस्य वक्तुमशक्यत्वात्। उपादानकारणत्वादेव च 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड० १।१) इति श्रुतौ योनिशब्दः प्रयुक्तः। उपादानकारणमपि न परिणाम्युपादानम्। 'कूटस्थोऽन्तर्यामी' (सर्वोप० १) इति श्रुतौ कूटस्थत्वोक्त्याऽऽत्मनो निर्विकारत्वस्य स्पष्टमेव प्रतिपन्नत्वात्। अतो विवर्तोपादानमेव तदित्यभ्युपगन्तव्यम्। यथा रज्जौ सर्पभ्रान्तिस्थले सर्पविवर्तोपादानभूताया रज्ज्वा भ्रान्तेः पूर्वं भ्रान्तिकाले भ्रान्त्युत्तरं चेति कालत्रयेऽप्येकरूपैवावस्थितिस्तथैवेहाऽऽत्मन इति जगद्विवर्तोपादानस्याप्यात्मनः कूटस्थत्वं सिद्धम्। ननु यथा तत्रान्धकारादिदोषेणोद्भूतं रज्जुविषयकमज्ञानं सर्परूपकार्यस्य परिणाम्युपादानं तथेहाऽऽत्मविषयकमज्ञानं जगद्रूपकार्यस्य परिणाम्युपादानकारणं वक्तव्यम्। तत्कथं समुत्पन्नमिति चेन्नैवम्। तस्यानादित्वात्। ननु तस्याज्ञानस्यानादित्वे 'एक एवाग्र आसीत्' इति प्रागुक्तश्रुतिविरोध इति चेन्न। अज्ञानस्य पारमार्थिकसत्त्वाभावात्। एक आत्मैव पारमार्थिक आसीन्नान्यत्किंचिदपि पारमार्थिकं द्वितीयं वस्त्विति हि श्रुतितात्पर्यम्। तथा च यथा पटं चिकीर्षुस्तन्तुवायः पटोपादानभूतांस्तन्तून्पश्यति तथाऽयमात्मा जगदुपादानभूतमज्ञानं पश्यति। पूर्वसृष्ट्यन्ते तत्तज्जीवकृतकर्मबीजसहितमज्ञानं यथाऽऽत्मनि लीनमभूत्तथैव पुनः सृष्ट्यारम्भक्षणे तदज्ञानं कार्योन्मुखमात्मा संकल्पयतीत्यर्थः। स एव चान्तःप्रतिबिम्बितजीवसहितानि व्यष्टिभूतान्यज्ञानानि क्रमेण तत्परिणामविशेषभूता लिङ्गदेहाश्च प्रादुरभूवन्। ततः स्थूलदेहा भवन्ति। स्थूलदेहेषु या तत्तज्जीवस्य मदीयता तां तादृशदेहप्रापकप्रारब्धकर्मसमाप्तौ शास्ता त्याजयति तदेव मरणम्। तथा लिङ्गदेहप्रापकप्रारब्धकर्मसमाप्तौ शास्ता तत्र मदीयतां त्याजयति स एव लयः। कारणदेहे च मदीयतात्यागो दुर्घट एव। स चाऽऽत्मज्ञानैकसाध्यः। स एव मोक्षः। तदुक्तं पञ्चदश्यां श्रीविद्यारण्याचार्यैः—

यथा मुञ्जादिषीकैवमात्मा युक्त्या समुध्दृतः।
शरीरत्रितयाद्धीरैः परं ब्रह्मैव जायते ॥ (प० द० ११४२) इति।

निद्रायां तु न देहत्यागः। किंतु तत्र मदीयताबुद्धिरेवाज्ञानेनापह्नुता, अतस्तत्र देहत्याग उपचर्यते। तदानीं प्रत्युत 'प्राणेन रक्षन्नवरं कुलायम्' (बृ० ४। ३। १२) इत्येवं देहसंरक्षणं श्रुतावुच्यते। अतस्तत्र तदानीं नैव देहत्यागप्रयुक्तं दुःखम्। तथा देहे मदीयताबुद्धिरेव यदा त्यज्यते तदा स जीवन्मुक्त एवेति तदुत्तरं कदाऽपि देहपाते दुःखं न भवति। विद्यारण्याचार्यैश्च यच्छरीरत्रितयादात्मनः समुद्धरणमुक्तं तद्देहे मदीयताबुद्धित्यागरूपमेव। बुद्धिश्च लिङ्गशरीरान्तर्वर्तिनी। सा च यदा ममतां विषयी करोति तदा मलिनेत्युच्यते। अहंता ममता चेत्येतौ विषयौ बुद्धेर्मल एव। लिङ्गशरीरं च बुद्धिप्रधानम्। लिङ्गशरीरे च कायपरिशुद्धिरीदृश्येव। स्थूलशरीरे च या कायपरिशुद्धिर्वैद्यशास्त्रे कथिता तां संपाद्य तया लिङ्गदेहशुद्धिः संपादनीया। तस्यां च जातायां लिङ्गदेहे ये कामक्रोधादयो रोगास्ते नष्टा भवन्ति। ततः क्रमेण कारणदेहे शुद्धे सद्यो मुक्तिर्न क्षणमपि तत्र विलम्बः। केवलेन वैद्यशास्त्रेण तथा पूर्वमीमांसाशास्त्रेणापि च न मोक्षमार्गप्रतिबन्धो निवार्यते। प्रतिबन्धकश्च मुख्यो मनसो दोषः कामसंज्ञकः। तदुक्तं भगवद्गीतायाम्—

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् (गी० ३।३७) इति।
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः॥ (गी० १८।९)

इत्येवं मोक्षमार्गाधिकारसंपत्त्यर्थं हि सात्त्विकस्त्याग उक्तः। तदुपपत्तये वैद्यशास्त्रे किमपि नोक्तम्। केवलं स्थूलेऽस्मिन्भौतिके देह आरोग्यसंपादकं वैद्यशास्त्रम्। तच्चौषधसेवनेन भवरोगसमानाधिकरणान्वातपित्तकफावस्थानवैषम्यदोषमूलकानन्यान्ज्वरादीन्रोगान्निवारयति नतु भवरोगविनाशायेषदपि प्रयत्नः। भवरोगो हि कारणदेहमारभ्य प्रवृत्तस्तत्संबन्धेन लिङ्गदेहे, तत्संबन्धेन च स्थूलदेहे प्रवृत्त इति तस्य कारणदेह एव चिकित्साऽऽवश्यकी। लिङ्गदेहे चाऽऽरोग्यसंपादकं पूर्वमीमांसाशास्त्रम्। तच्च नैमित्तिकं यत्कर्म प्रायश्चित्ताख्यं तादृशौषधसेवनेन भवरोगसमानाधिकरणान्रजस्तमसोराधिक्यदोषमूलकानन्यान्महापातकादीन्रोगान्निवारयति। तदुक्तम्—

रोगनाशकपदार्थयोजनं शक्तिवर्धकपदार्थसेवनम् ।
धातुसाम्यकरमन्नभक्षणं वैद्यकं त्रिविधमेतदुच्यते ॥
वैद्यकं लिङ्गदेहस्य वेद एवोच्यते बुधैः ।

तत्र पापनाशकानां नैमित्तिककर्मणां मनोवृत्तिप्राणवृत्त्युत्साहकानां काम्यकर्मणां मनःप्राणेन्द्रियाणां प्रमाणानतीतत्वमवस्थापयतां नित्यकर्मणां च प्रतिपादनात्। परिणामे हितं च वेदं विना दुःसाधमेव । यतो यथा—

यदि दुष्टं भवेद्रक्तं त्वचि दोषस्य का कथा ।
यद्यदुष्टं भवेद्रक्तं त्वचि दोषस्य का कथा ॥

अत्रोभयत्र क्रमेणौषधेनाप्यसाध्यत्वमौषधं विनाऽपि साध्यत्वं च हेतुद्वयम् । तथा—

यदि दुष्टं भवेत्सूक्ष्मं स्थूले दोषस्य का कथा ।
यद्यदुष्टं भवेत्सूक्ष्मं स्थूले दोषस्य का कथा ॥

इत्युक्तरीत्या स्थूलदेहारोग्यतायै लिङ्गदेहारोग्यताऽऽवश्यिकैव भवति । सा च श्रुतिप्रदर्शितमार्गानुसरणे सत्येव भवति । यद्यपि पूर्वमीमांसाशास्त्रे न भवरोगविनाशायैषदपि प्रयत्नस्तथाऽपि तेन पूर्वमीमांसाशास्त्रेण बहूपकृतं मन्ये । यदयं महाशनः काम एकपदे निर्विषयः कर्तुमशक्य इति विचिन्त्य तस्य कामस्य पुरतः सात्त्विकं विषयं निधाय राजसात्तामसाच्च विषयाद्दूरीकृतो मीमांसाशास्त्रेण । सात्त्विकविषयानुसारिकामाविष्टचित्तश्च तादृशसंस्कारदार्ढ्ये यदि कदाचित्पूर्वसुकृतवशात्सात्त्विकविषयेष्वपि दोषान्पश्येत्तर्हि नैव राजसतामसविषयाननुसरेत्प्रत्युत विचारेण सात्त्विकानपि विषयान्परिहर्तुं प्रयतेतैव । ततश्च स मोक्षमार्गाधिकारी भवति । विचारं कर्तुमपि च सामीचीन्येन मनसः प्रवृत्तिः स्थूलशरीरस्याऽऽरोग्ये सत्येवेति तादृशारोग्यसंपादकं वैद्यकमपि परम्परयोपकरोत्येवेति बोध्यम् । कारणदेहे चाऽऽरोग्यसंपादकं वेदान्तशास्त्रम् । तच्चाऽऽत्मज्ञानरूपौषधसेवनेनाज्ञानदोषमूलकमनादिभवरोगं निवारयति । ननु कारणशरीरमज्ञानरूपम् । तत्र दोषोऽपि चाज्ञानमेवोच्यते । तत्कथमेतदिति चेत्—उच्यते । अनादि चैतदज्ञानं प्रातिभासिकम् । प्रातिभासिकस्य च वस्तुनोऽज्ञातस्य नैव कार्यकारित्वम् । यथा व्यावहारिकात्सर्पादज्ञातादपि दंशः संभवति न तथा प्रातिभासिकात्सर्पा-

दज्ञातात्किंचिदपि कार्यं भयकम्पादिकं जायमानं दृश्यते। किंतु ज्ञातादेव। तच्च सर्पज्ञानमपि यदि प्रातिभासिकत्वेन जायते तदा तस्मादज्ञातादिव भयकम्पादिकार्यस्याभाव एव दृश्यते। नन्वेवं निरीक्षणकाले निरीक्षितुरनाद्यज्ञानविषयकं प्रातिभासिकत्वेन ज्ञानं नास्तीत्यभ्युपेयम्। तच्च सुतरां नैव संभवति। जीवस्य तथा संभवोऽस्तु नाम। निरीक्षणकर्ता चायमीश्वरस्तस्य कथं याथातथ्येन ज्ञानं न स्यादिति चेत्—उच्यते। ईश्वरस्याज्ञानविषयकं प्रातिभासिकत्वेन ज्ञानं नास्तीति न मन्यामहे। किंतु यथा लोके कश्चनैन्द्रजालिकः पुरुषो लोकानां चमत्कारं प्रदर्शयन्स्वयं तत्रत्यपदार्थानां याथातथ्येन ज्ञानवानप्याकस्मिकान्सर्पादीन्पदार्थान्प्रदर्शयति तथैवात्र बोध्यम्। ननु तदानीं तस्यैन्द्रजालिकस्य पुरुषस्य तादृशसर्पादिपदार्थाः सर्पत्वादिना प्रतीयन्ते न वा। प्रतीयन्ते चेत्तस्य याथातथ्येन ज्ञानं तत्प्रतीतिप्रतिबन्धकं कुतो न जायत इति वक्तव्यम्। नहि रज्जुत्वेन रज्जुं जानानस्य सर्पप्रतीतिर्भवति। न प्रतीयन्ते चेत् प्रेक्षकाणामयमाकस्मिकसर्पादिपदार्थदर्शनक्षण इति तेनैन्द्रजालिकेन कथं ज्ञायते तद्वक्तव्यमिति चेत्—अत्र केचिदित्थं समादधते। प्रातिभासिकं कारणं याथातथ्येन जानतो दृष्ट्या कार्यं न प्रतीयत इति सत्यमेव। किंतु सृष्ट्यारम्भक्षणे तस्मिन्नुपादानभूतेऽज्ञाने कुर्वद्रूपतामनुसंदधातीश्वरः। तेन च तदानीं तदज्ञानं प्रस्फुरद्रूपमिव किंचिद्विपरिवर्तते। तेनैव लक्षणेनायं जगदुत्पत्तिं विजानातीश्वरः। तथैन्द्रजालिकोऽपि सर्पादीन्पदार्थानपश्यन्नपि केनचिदुपादानगतेन सूक्ष्मेण लक्षणेन सर्पादीन्पदार्थानुत्पन्नान्कल्पयति। नैतद्युक्तिसहम्। ईश्वरो हि भक्तस्य दुःखं निवारयन् दुःखसाधनं दृष्ट्वैव तन्निवारयतीत्येवोचितम्। अन्ये त्वित्थं वर्णयन्ति। प्रातिभासिकं कारणं याथातथ्येन जानतोऽपि——यावत्तज्ज्ञानं परोक्षं तावत्तद्दृष्ट्या कार्यमितरजनदृष्ट्येव प्रतीयत एव। केवलं कार्यमपि तद्दृष्ट्या प्रातिभासिकत्वेनैव प्रतीयते। इतरजनदृष्ट्या तु व्यावहारिकत्वेन प्रतीयत इति विशेषः।

प्रकृतमनुसरामः। कारणशरीरमनाद्यज्ञानरूपमिति सत्यमेव। तद्विषयकं च 'इदमज्ञानम्' इत्येवं ज्ञानं यच्च भवति तदनाद्यज्ञानविषयकमज्ञानं कारणशरीरस्यानाद्यज्ञानरूपस्य रोगः। तस्य रोगस्याऽऽत्मज्ञानेन विनाशे 'इदमज्ञानम्' इत्येवंरूपेण तदनाद्यज्ञानं ज्ञातं भवति। एवमनाद्यज्ञाने याथातथ्येन ज्ञाते ज्ञातुरिच्छाया अभावे तत्कार्यकारि न भवतीति स ज्ञाता भवरोगान्मुक्तो भवति।

अत्रेदमवधेयम् । प्रलयकाले सांसारिकाः सर्व एव पदार्था विनश्यन्तीति तदानीमनायासेनैव सर्वेषामेव जीवानां कुतो मोक्षो न भवति तदिदानीमुच्यते । लोके यथा घटस्य घटापेक्षया सूक्ष्मेण मृत्तिकारूपेणावस्थितौ घटनाश उच्यते तथैव प्रलयकाले सर्वेषां वस्तूनां नाशो भवति सूक्ष्माणामपि सूक्ष्मतररूपेणावस्थानम् । यदपेक्षयाऽन्यदान्तरं रूपं नास्ति तद्रूपेणावस्थानमिति यावत् । तादृशं चाज्ञानमेव । तच्चानादि स्वीकार्यम् । तच्चाज्ञानं सर्वेषां पदार्थानामान्तरमिति भावरूपमेव न तु ज्ञानाभावरूपम् । तत्रैवाभुक्तभोगानां जीवकृतकर्मणां भावरूपाज्ञानविशेषरूपेणावस्थितिः । ईशकृतकर्मणोऽपि तथैव । तादृशाज्ञानसंबन्धेन च पुनः पूर्ववत्सृष्टिः । अत ईशस्य न वैषम्यनैर्घृण्यदोषलेशः । 'धाता यथापूर्वमकल्पयत्' ( म. ना. ५ । ७ ) इति श्रुतिरत्र प्रमाणम् । तथा च प्रलयकालेऽप्यविनष्टाः केचित्पदार्थाः पुनः सृष्ट्यारम्भकाले प्रादुर्भवन्ति । अत्रायं संग्रहः–

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥ इति ।

अत्र च विशुद्धचिद्व्यतिरिक्ताः पञ्च पदार्था अनादित्वेनाभिमता अपि सान्ता भवन्ति । यथा नैयायिकनयेऽनादिः सान्तः प्रागभावो भवति तद्वत् । ननु सादित्वसान्तत्वयोः समनियतत्वं दृश्यते । युक्तं चैतत् । आदिरुत्पत्तिः । अन्तो विनाशः । उत्पत्तिश्चावयवसंयोगेन । तथा विनाशोऽवयववियोगेन भवतीति प्रसिद्धमेव । परमाणुद्वयसंयोगाद्द्व्यणुकोत्पत्तिः । परमाणुद्वयविभागाच्च द्व्यणुकनाशो भवति । तथा चात्र जीवादीनां पञ्चानां सादित्वाभावे कथं सान्तत्वमुच्यते । न च भावविषय एवायं नियम उक्तयुक्त्या सिध्यति । तथा च जीवेशयोर्भिदाया अभावरूपायाः सादित्वाभावेऽपि सान्तत्वं स्यात् । तथैवाविद्याया अनिर्वचनीयस्वरूपाया उत्पत्तिरवयवसंयोगेन भवतीति वक्तुमशक्यम् । तथा च तत्राप्युक्तनियमस्याभाव इति सादित्वाभावेऽपि सान्तत्वं वक्तुं शक्यम् । अविद्यायाश्चानिर्वचनीयत्वेन तद्योगस्याप्यनिर्वचनीयत्वात्तत्रापि सान्तत्वं वक्तुं शक्यमिति वाच्यम् । तथाऽपि जीवेशयोर्भावयोर्निर्वचनीययोश्च सादित्वाभावे सान्तत्वं स्वीकर्तुमशक्यमिति चेन्नैवम् । जीवेशयोरन्तो नाम न विनाशः । किंत्वयं जीवोऽयमीश इति प्रतीत्यभाव एव । तथा च तयोः सान्तत्वमौपचारिकमित्यदोषात् ।

अन्तश्च तेषां मोक्षकाल एव। स चाऽऽत्मज्ञानेनैव। नान्यः पन्था विद्यतेऽयनाय' (श्वे. ३।८) इति श्रुतेः। मोक्षे सर्वविधमनोवृत्तीनां मनसा सहैवाभावे केवलश्चिद्रूप आत्माऽवशिष्यते। तदानीमयमात्मेति संविज्ञानं नास्त्येव। विषयविषयिभावस्याभावात्। ज्ञातुश्च तदानीं ज्ञातृत्वरूपेणानवस्थितेः। यथा दर्पणोपाधिविनाशे प्रतिबिम्बस्य बिम्बरूपेणैवावस्थानं भवति तद्वत्। एतेन दर्पणोपाधिविनाशे प्रतिबिम्बविनाश इवाज्ञानोपाधिविनाशे मोक्षकाले जीवस्यापि विनाशः स्यादिति स्वविनाशाय मुमुक्षुः कथं प्रवर्तेत इति परास्तम्। यतो दर्पणोपाधौ प्रतिबिम्बदर्शनसमयेऽपि च बिम्बसत्ताधीनसत्ताकस्य नैव पृथक्सत्ता प्रतिबिम्बस्य। किंतु तदानीमपि बिम्बरूपेणैव सत्ता। केवलं तदानीं पृथगिवावभासते। तथा च यथा किंचित्कारणं कार्योत्पत्तिक्षण एव विनश्यदपि कारणत्वेनोच्यते यथाऽन्धकारः प्रदीपानयनस्य कारणं भवति तथैवाऽऽत्मज्ञानमत्र मोक्षस्य कारणं श्रुतावुच्यते। नन्वन्धकारविनाश एव प्रदीपानयने हेतुः, तथाऽत्र नाऽऽत्मज्ञानविनाश एव मोक्षे हेतुः। तथा च कथमयं दृष्टान्त इति चेन्न। 'कार्योत्पत्तिक्षण एव कारणविनाशः' एतावन्मात्रेण दृष्टान्तोपादानात्। अन्धकारस्यापि विनाशद्वारा दीपानयनहेतुत्वमस्त्येव। अथवा धूमशकटसाधनकं गमनं ग्रामान्तरप्राप्तेः कारणं भवति। तत्र च ग्रामान्तरप्राप्तिक्षण एव तत्कारणस्य धूमशकटगमनस्याभावो भवति तद्वदिति दृष्टान्तो बोध्यः।

इदं चात्रावधेयम्—अयमात्मेति विज्ञानं मोक्षे नास्त्येवेति यदुक्तं तद्विदेहमुक्त्यवस्थायां द्रष्टव्यम्। जीवन्मुक्तिदशायां तु यद्यपि तादृशं ज्ञानं संभवति तथाऽपि तदनस्तिकल्पमेव। ननु मुक्त्यवस्थायामहंकारस्य नाश इदंताया अपि विनाशादयमात्मेति ज्ञानस्य नैव संभव इति चेन्न। तदानीं मनस्यहमित्यभिमानाभावेऽप्यन्तःकरणचतुष्टयस्य वस्तुतः सत्त्वेन तत्र च पूर्वसंस्कारवशादयमात्मेति ज्ञानस्य संभवसत्त्वात्। यथा स्वापे कस्यचित्पूर्वसंस्कारवशाद्वाक्प्रवर्तते तद्वत्। अत एव तदानीं जायमानमपि सर्वमेव ज्ञानमनस्तिकल्पं भवति।

इत्थं श्रुतीनामेकवाक्यतया अन्यथानुपपत्त्या सिध्यन् 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' (गौ. पा. १।१७) इति माण्डूक्यकारिकातः स्वरसतः प्रतीतोऽन्यत्र श्रुतौ क्वाप्यनिषिद्धश्च योऽयमविद्यावादस्तमनुसृत्येयं प्रक्रियाऽभिहिता। एतदुक्तं भवति। 'तत्त्वमसि' (छा. ६।८।७) इत्यभेदमति-

पादकश्रुत्या जीवब्रह्मणोरैक्ये श्रुतिप्रमाणनिश्चिते तदन्यथानुपपत्त्याऽयमविद्यावादः श्रौतत्वेनाऽऽश्रितः श्रीमच्छंकराचार्यैः । न तेषां तत्राभिनिवेशः कश्चित् । अविद्याशब्देनाज्ञानमुच्यते । विद्याशब्दस्य ज्ञानवाचित्वात् । इयं च निसर्गत एव त्रिगुणात्मिका । तत्र शुद्धसत्त्वप्रधाना मायेत्युच्यते । मलिनसत्त्वप्रधाना त्वविद्येत्युच्यते । तदुक्तम्–

तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा ।
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते ॥ (पं. द. १।१५)

इति । सत्त्वस्य प्रकाशात्मकस्य गुणस्य शुद्धिर्गुणान्तरेणाकलुषीकृतत्वमिति तत्र टीकायां स्पष्टम् । एतदविद्यापदवाच्यमज्ञानं जगन्मूलकारणमनिर्वचनियमित्यगत्या स्वीकर्तव्यं भवति । जगदुपादानकारणस्य निर्वक्तुमशक्यत्वात् । तथा हि–तच्चानादि । अथानादिशब्दस्य कोऽर्थः । आदिर्नास्त्येवाथवा सन्नपि न ज्ञायते । नास्त्येव चेत्सांप्रतमनुभूयमानो मध्यः कथं स्यात् । किंचाऽऽदिर्नास्ति चेन्नित्यमेव तद्भवति । तथा च तस्य मोक्षे कथं लयः । अथानादिः सान्तः प्रागभावो यथा तथैवेदमज्ञानमिति चेन्नैतद्युक्तिसहम् । आदिं विनाऽन्तस्य वक्तुमशक्यत्वात् । अथास्याज्ञानस्याऽऽदिरस्त्येव । केवलं स न ज्ञायत इति द्वितीयः कल्पः समाश्रीयत इति चेत्–यद्युत्पत्तिरस्ति तर्हि तदानीं तस्या अवस्थायाः काऽपि कल्पना स्यादेव । तथा च कीदृशी साऽवस्था स्यादिति विभावनीयं भवति । इदानीमनुभूयमानं वैषम्यं तदानीमस्ति न वा । अस्ति चेत्कथं तस्य निरपेक्षस्य सिद्धिः । नास्ति चेत्कदा कथं च तद्वैषम्यं समुत्पन्नमिति वक्तुं न शक्यते । तथा च पक्षद्वयेऽपि युक्तियुक्तं किंचिद्वक्तुं न शक्यत इत्यतोऽनिर्वचनीयस्वरूपमेव तदित्यङ्गीकृतं भवति ।

ननु तस्य त्वं तत्त्वमिति षष्ठीतत्पुरुषेण तत्त्वमित्येकं पदं सामासिकं परिकल्प्य भेदवादिभिः श्रुत्यर्थो योजितः । तथा रामानुजीयैरपि जीवब्रह्मणोः शरीरशरीरिभावमाश्रित्य शरीरशरीरिणोश्चाभेदमारोप्य श्रुत्यर्थो योजितः । एवं द्वैतिनां मतेऽपि तस्याः श्रुतेरुपपत्तिर्भवतीति चेदुपपत्तिरेषा ननु द्वैते प्रमाणभूतैषा श्रुतिः । उपपत्तिर्नाम सिद्धान्त इति गृहीतस्य कस्यचिदर्थस्य श्रुतिविरोधः प्रतीयते चेदर्थान्तरयोजनया तदविरोधसंपादनम् । ननु स श्रुतितः स्वरसतः प्रतीयमानः सरलोऽर्थः। एतादृशीमुपपत्तिं कुर्वता च प्रामाण्यच्छलेन श्रुतेरप्रामाण्यमेव स्वीकृतं भवति । तथा चोक्तम्–

अप्रामाण्योक्तिपर्याय उपपत्तिवचो मतम् ।
यथा मूर्खोक्तिपर्यायो देवानां प्रिय इत्ययम् ॥ इति ।

अपि च—उपपत्तौ प्रवर्तन्ते लज्जन्ते ये नृणां पुरः ।
वचनस्याप्रमाणत्वं प्रतिपादयितुं किल ॥ इति च ।

किंचास्त्वेवमुपपत्त्याऽपि यथाकथंचित्तादृशश्रुत्यविरोधसंपादनम् । ननु सा श्रुतिः सिद्धान्त इति गृहीते स्वाभिमतेऽर्थे प्रमाणभूता भवति । यो ह्यर्थः श्रुतिवाक्यात्स्वरसतः सरल इति प्रतीयते तत्रैवार्थे तद्वाक्यं प्रमाणं भवति । तथा च द्वैतवादिभिर्द्वैतविषये श्रुतिवाक्यमेवान्यत्किंचित्प्रमाणतया प्रदर्शनीयं भवति ।

या तु द्वैतिभिरात्मा वा अरे द्रष्टव्यः ( बृ. २ । ४ । ५ ) इति श्रुतिर्भेदे प्रमाणत्वेनोपन्यस्ता सा न संभवति । एष हि तेषामाशयः—द्रष्टव्य इति हि दर्शनविधिः । स च द्रष्टा दृश्यं दृशिश्चेति त्रिपुटीमन्तरेण नोपपद्यते । तथा च दृशिकर्ता द्रष्टा भिन्नः । दृशिकर्म दृश्यं ततो भिन्नम् । दृशिक्रिया च ताभ्यां भिन्नेति भेद आवश्यक एवेति दर्शनविध्यन्यथानुपपत्त्या भेदः सिध्यतीति । किंतु तत्रैवमुच्यते । दर्शनविधितः पूर्वं तादृशोपदेशाय या श्रुतेः प्रवृत्तिः साऽपि तत्रोपदेष्ट्रुपदेश्यमुपदेशश्चेति त्रिपुटीमन्तरेण नोपपद्यते । तथा चोपदेष्ट्री श्रुतिर्भिन्ना । उपदेश्या नरास्ततो भिन्नाः । उपदेशक्रिया च ताभ्यां भिन्नेति भेद आवश्यक एवेति प्रवृत्त्यन्यथानुपपत्त्या भेदः सिध्यतीति कुतो नोच्यते द्वैतिभिः । किमर्थं तत्र द्वैतिनस्तूष्णींभावमास्थिताः । तथा तत्त्वमसीत्यादिमहावाक्यविषयेऽपि श्रुतेः प्रवृत्त्यन्यथानुपपत्त्या भेदः सिध्यतीति कुतो नोच्यते । अत्र द्वैतिनामयमभिप्रायः—यथा केनचिदुच्चारितं शब्दमनुकुर्वन्नगत्या तथैवोच्चारयति । तत्रानुकार्यभूतः शब्दः साधुशब्दो वाऽस्त्वसाधुशब्दो वाऽस्तु तत्रौदासीन्यमेवावलम्ब्यते । अन्यथाऽनुकार्यस्वरूपभङ्गापत्तेः । तथाऽत्रोपदेश्याञ्जीवानुपदेष्टुं प्रवृत्ता श्रुतिरगत्या भेदमवलम्बते । अन्यथोपदेश एव न संभवति । अनादिकालमारभ्य भेदं गृहीत्वैवोपदेश्यानां जनानां व्यवहारे प्रवृत्तत्वात् । तथा चोपदेशान्यथानुपपत्त्या भेदः सिध्येन्नतु तस्य भेदस्य सत्यत्वं सिध्येत् । यथा साधुशब्दं विजानता पण्डितेनाप्यपशब्दमनुकुर्वतोच्चारितः शब्दः साधुरेवेति न निर्णयस्तथा श्रुत्याऽप्युपदेशार्थं भेदं गृहीत्वा प्रवृत्तया गृह्यमाणो भेदः सत्य एवेति न निर्णयः । अत उपदेशान्यथानुपपत्त्या सिध्यमानस्यापि भेदस्य सत्यत्वे सा श्रुतिर्न प्रमाणत्वेन

पुरस्कारमर्हति । अतस्तत्र द्वैतिनामौदासीन्यमिति चेत्—अग्रे दर्शनविध्यन्यथानुपपत्त्याऽपि सिध्यमाने भेदेऽप्येवमेव दृष्टिं निवेहि । तत्राप्युपदेश्यजीवानुसारेणैव श्रुत्या दर्शनविधानात् । तथा च भेदस्य सत्यत्वे द्रष्टव्य इति श्रुतिर्न प्रमाणमिति सिद्धम् ।

अथ 'द्वा सुपर्णा०' (श्वे० ४ । ६) इति श्रुतिर्द्वैतविषये प्रमाणमिति चेन्मैवं वादीः । यथा हि 'तत्त्वमसि' (छा० ६ । ८ । ७) इति श्रुतिरद्वैतं विधत्ते तथा 'द्वा सुपर्णा०' इति श्रुतिर्नैव द्वैतं विधत्ते । किंतु द्वैतं सिद्धवद्गृहीत्वाऽन्यत्किंचिद्विधत्ते । एतादृश्यः श्रुतयश्च कर्मकाण्डगताः सर्वा एव । द्वैतदर्शिन एव जना उपदेश्या इत्यतो द्वैतं सिद्धवद्गृहीत्वा ताः प्रवृत्ताः । बालं प्रति बालभाषयैव वक्तव्यं भवति । किं बहुना ज्ञानकाण्डस्थश्रुतिरपि द्वैतान्तर्गतं शब्दार्थसंबन्धं गृहीत्वैव प्रवृत्ता भवति । नैतावता द्वैतं तादृशश्रुतिप्रमाणेन सिद्धं भवति । उपदेष्टा हि नानाविधानामुपदेश्यानां मतिवैचित्र्यात्सर्वेषां च प्रज्ञामेकेनैव प्रकारेण सन्मार्गे संग्राहयितुं न शक्नोति । प्रकृते च श्रुतिरुपदेष्ट्री । उपदेश्याश्च जीवात्मानो यथाकर्म यथाश्रुतं संप्राप्तेष्वनन्तजन्मसु द्वैतमार्गेण संचरन्तो दृढसंस्कारवशान्नैकपद एवाऽऽत्मैक्यं निश्चेतुं प्रभवेयुः । अतः सत्येनासत्येन वा येन केनापि मार्गेणोपदेश्यस्य प्रज्ञायां शनैः शनैरात्मैक्यबोधानुगुण्यं संपादयितुं श्रुतिः प्रवर्तते । क्वचिदात्मानमणुतरत्वेन वर्णयति क्वचिन्महत्तरत्वेन क्वचिद्व्यापकत्वेन क्वचित्सर्वज्ञत्वादिगुणैश्चेत्येवं विधिमुखेन प्रवर्तते । क्वचिच्च यद्वाचाऽनभ्युदितं, यन्मनसा न मनुते (के. ४ ५) इति । क्वचिच्च निर्गुणशब्देनैवेति निषेधमुखेन प्रवर्तते । क्वचिच्च यतो वाचो निवर्तन्तेऽप्राप्य मनसा सहेत्येवं वाङ्मनोनिवृत्त्यपादानत्वेन वर्णयति । नृसिंहोत्तरतापिन्यां तु 'अवचनेनैवानुभवन्नुवाच' (नृ० उ० ७) इत्येवमवचनेनैवाऽऽत्मानुभव उक्तः । तथा चोक्तम्—

बोधयन्त्यात्मनो रूपं प्रवृत्ताऽपि पुनः श्रुतिः ।
अशक्ता निर्गुणं वक्तुं पर्यायेण समभ्यधात् ॥

यथा—बोधयन्ती पतिं साध्वी मर्यादावृतमानसा ।
इदानीं तत्र कोऽन्यः स्यादित्येवं भाषते ध्रुवम् ॥ इति ।

अत्र सर्वत्र पार्यन्तिकोद्दिष्टार्थैक्यान्न श्रुतीनां मिथो विरोधः शङ्कनीयः । जगत्यस्मिन्परस्य यो गुणो निषेधो वा कस्यचिद्विशेषपरिचितस्तद्द्वारा तेनाऽऽत्म-

स्वरूपं प्रथमतः कल्पनीयमिति हि श्रुतितात्पर्यम् । ननूपदेश्यमतिवैचित्र्येणानेकैः प्रकारैरात्मस्वरूपवर्णनमस्तु नाम । किंतु तेऽनेके प्रकारा अन्धगजन्यायेनैकत्र संभविनोऽपेक्षिताः । अत्र तु श्रुतिषु वर्णिताः केचित्प्रकारा एकत्रासंभविनो दृश्यन्ते । तथा हि—अणीयानिति महीयानिति च मिथो विरुद्धं दृश्यते । तथा एषोऽणुरात्मा चेतसा वेदितव्यः ( मु० ३ । १ । ९ ) इति, यन्मनसा न मनुते ' इति च विरुद्धं दृश्यते इति चेदत्राऽऽहुः । अणीयस्त्वं न परिमाणतः किंत्वणीयस्त्वं सूक्ष्मतरत्वम् । सूक्ष्मत्वस्य च महत्त्वेनाऽऽकाश इव न विरोधः । तथा चेतसा वेदितव्य इत्यत्राऽऽत्मस्वरूपं मनसा विभावनीयमित्युच्यते । सर्वत्रैव हि विधौ यावच्छक्त्येव विधाने तात्पर्यं दृश्यते । भोक्तव्यं द्रष्टव्यमित्युक्ते नैव सर्वावयवशः कार्त्स्न्येन भोजनं दर्शनं वा विधातुमिष्यते । किंतु यावच्छक्त्येव । तथा च मनसैवानुद्रष्टव्यम्, चेतसा वेदितव्यः, इत्यत्र मनसाऽऽत्मचिन्तनं यावच्छक्त्येव विधीयते । शक्तिश्च न सर्वेषां समाना । अधिकारिभेदेन तस्यां तारतम्यमवश्यं भाव्येव । तस्याश्चात्र परा काष्ठा कीदृशी सा यन्मनसा न मनुते, मनसा सह वाचो निवर्तन्ते, इत्यत्र प्रदर्शिता भवति । शुकाचार्यसदृशेन शान्ततरमनसा विदुषा यद्यप्यात्मस्वरूपं विभावयितुं प्रयत्यते तथाऽपि पर्यन्ते मनसो निवृत्तिरेव स्यात् । अशब्दमस्पर्शमरूपमव्ययमित्यादिकानि विजरो विमृत्युरित्यादीनि चोपनिषद्गतान्यात्मवर्णनपराणि सकलानि श्रुतिवाक्यान्यालोच्य तदनुसारेणाऽऽत्मस्वरूपं विभाव्यते चेत्तत्र मनोवृत्तेर्विरतिरेव स्यात् । मनोऽपि हि श्रोत्रादीन्द्रियविषयानतीत्य न विभावनां कर्तुं प्रभवति । इन्द्रियाणां गतिर्हि विषयसंनिकर्षाधीना संनिकर्षाभावेऽपि च मनसो गतिर्भवति । एतावानेव विशेषः । विषयास्तु तुल्या एव । षष्ठस्येन्द्रियस्य तद्विषयस्य चाभावादेव मानसिकी कल्पनाऽपि तादृशी न भवति । तदुक्तम्—

शब्दाद्या एव विषया अक्षाणां मनसोऽपि च ।
संनिकर्षाधीनतायां वैषम्यं स्यात्तु केवलम् ॥ इति ।

तथा च मनोवृत्तिनिवृत्तिपर्यन्तमात्मस्वरूपविभावना कार्येति ' चेतसा वेदितव्यः ' इत्यादिश्रुतीनां तात्पर्यम् । न तु " यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह, इत्येतादृशी श्रुतेरपि यत्र गतिस्तत्र का वार्ता मादृशाम् । अतश्च तूष्णीमेव स्थेयम् । नत्वात्मप्रवचन आत्मचिन्तने च प्रवर्तितव्यम् " इत्येतादृशाक्षुद्रवि-

चारस्यावसरो न देयः । यतो वाचो निवर्तन्ते, इत्यस्याः श्रुतेरेतदेव तात्पर्यं यदनवरतं प्रवचनं कुर्वतां निसर्गत एव वाचो निवृत्तिर्भववीति । एतेन--

वाग्निवृत्तिं कथयितुं कथं वागेव वर्तते ।
मूकोऽस्मीतिवदेतस्यादश्रद्धेयं श्रुतेर्वचः ॥ इत्येतदपास्तम् ।

श्रुतितात्पर्याज्ञानात् । ' नायमात्मा प्रवचनेन लभ्यः ' ( का० २ । २३, मु० ३ । २ । ३ ) इत्यस्याः श्रुतेरपि न प्रवचनविरामे तात्पर्यम् । किंतु प्रवचनं कुर्यादेव तच्च तथा कर्तव्यं यथाऽनवरतमात्मप्रवचनं कुर्वत आत्मयाथात्म्यस्य वागविषयत्वेन निसर्गत एवाऽऽत्मानमलब्ध्वैव प्रवचनाद्विरामो यस्य भवेत्तमेवाऽऽत्मा स्वीयत्वेन वृणुते तेनैव च लभ्योऽयमात्मा तस्यैव चायमात्मा स्वयाथात्म्यं प्रकाशयतीति । एवैव च नायमात्मेति श्रुतिगतयोः पूर्वोत्तरार्धयोर्मिथः संगतिर्बोध्या। न मेधया न बहुना श्रुतेनेत्यस्यापि तात्पर्यमुक्तरीत्यैव बोध्यम् ।

प्रकृतमनुसरामः । यथा च 'तत्त्वमसि' ( छा० ६ । ८ । ७ ) इति श्रुतिर्जीवब्रह्मणोरभेदं विधत्ते, एवम् ' इदं सर्वं यदयमात्मा ' ( बृ० २ । ४ । ६ ) इति श्रुतिर्जगद्ब्रह्मणोरभेदं विधत्त इत्यद्वैतमतस्य श्रौतत्वं सिद्धम् । द्वैतं तु जीवब्रह्मणोर्जगद्ब्रह्मणोर्वा न क्वापि श्रुतौ साक्षाद्विहितमिति द्वैतमतस्य श्रौतत्वं न सिध्यति ।

यत्तु द्वैतिभिरुक्तम्--तत्त्वमसि, इदं सर्वं यदयमात्मेत्यादिवाक्यानां जीवब्रह्मणोर्जगद्ब्रह्मणोश्चैक्यप्रतिपादकत्वेऽङ्गीक्रियमाणे तेषां प्रेक्षावद्भिरनुपादेयत्वमापद्येत । श्रुतिसूत्रादीनां प्रेक्षावद्भिरनुपादेयत्वाभ्युपगमो न युक्तः । अतः श्रुतिसूत्रादीनां ब्रह्मैक्यप्रतिपादकत्वं नैव वक्तव्यमिति । तच्चिन्त्यम् । तत्त्वमस्यादिवाक्यानां जीवब्रह्मैक्यप्रतिपादकत्वेऽङ्गीक्रियमाणे तेन तेषां वाक्यानामनुपादेयत्वं भवतीत्यत्र प्रमाणाभावात् । न च जीवब्रह्मणोरैक्यस्य शशविषाणवन्ध्यासुतवदसत्यत्वेन तत्प्रतिपादकवाक्यानामनुपादेयत्वमिति वाच्यम् । जीवब्रह्मैक्यस्य शशविषाणादिवदसत्यत्वे प्रमाणाभावात् । ननु परं ब्रह्मैकमेव सत्यं तदतिरिक्तं सकलं मिथ्येति ह्यद्वैतिनां मतम् । तथा चात्र यज्जीवब्रह्मैक्यं तद्ब्रह्मणः सकाशाद्भिन्नमभिन्नं वा । यदि भिन्नं तर्हि तस्य भवदुक्तरीत्यैव मिथ्यात्वं समागतमिति मिथ्याभूतार्थप्रतिपादकवाक्यानामुपादेयत्वं कथं स्यात् । अभिन्नं चेत्तत्र न प्रमाणं पश्यामः । इदं सर्वं यदयमात्मेति श्रुतिरेव तत्र प्रमाणमिति तु न संभ-

वति। श्रुत्यर्थोत्तरं सिध्यमानस्य ब्रह्मैक्यस्य श्रुतिघटकोद्देश्यबोधकेदंशब्देन ग्रहणं न संभवतीति चेत्—मैवं वादीः। जीवब्रह्मैक्यं ब्रह्मणः सकाशाद्भिन्नमभिन्नं वेति योऽयमाक्षेपः स ब्रह्मैक्यस्य कीदृशं स्वरूपं गृहीत्वा कृतः। ब्रह्मैक्यं ब्रह्मधर्म इति चेन्न। अद्वैतिभिर्ब्रह्मणो निर्धर्मकत्वाङ्गीकारात्। कीदृशं तर्हि ब्रह्मैक्यस्य स्वरूपमिति चेच्छृणु। ब्रह्मैक्यं ब्रह्मप्रतियोगिकभेदाभावः। अभावस्य च निःस्वरूपत्वान्न तेन ब्रह्मणः सद्वितीयत्वमाशङ्कितव्यम्। यच्च द्वैतिभिरुक्तं जीवब्रह्मैक्यस्य ब्रह्मणः सकाशाद्भिन्नत्वे ब्रह्मभिन्नत्वेन मिथ्यात्वात्तादृशमिथ्याभूतार्थप्रतिपादकत्वेन महावाक्यस्यानुपादेयत्वं स्यादिति। तत्र महावाक्यस्य स्वरूपत एव ब्रह्मभिन्नत्वेन यन्मिथ्यात्वं तत्पारमार्थिकदशायामेव न तु व्यावहारिकदशायामिति तस्य व्यावहारिकसत्यत्वेन नानुपादेयत्वमिति चेन्महावाक्यार्थभूतस्य जीवब्रह्मैक्यस्यापि मिथ्यात्वं पारमार्थिकदशायामेव न तु व्यावहारिकदशायामिति तादृशव्यावहारिकसत्यार्थबोधकमहावाक्यस्य कुतोऽनुपादेयत्वमापाद्यत इति स्वयमेव विचारय। यच्चापीदं सर्वं यदयमात्मेति श्रुत्यर्थोत्तरं सिध्यमानस्य ब्रह्मैक्यस्य श्रुतिघटकोद्देश्यबोधकेदंशब्देन ग्रहणं न संभवतीत्युक्तं तदपि न क्षोदक्षमम्। इदं सर्वं यदयमात्मेति श्रुतिर्हीदंशब्दगृहीतस्यास्य जगतो ब्रह्मात्मैक्यं नोत्पादयति। किंतु वस्तु सदेव तत्केवलं बोधयति। तथा चेदंशब्दागृहीतस्यापि कस्यचिद्यदि ब्रह्मणा सहैक्यं वस्तु सत्स्यात्तर्हि तन्निवारयितुं नैवेयं प्रभवति श्रुतिः। न हि घटस्य द्रव्यत्वं बोधयद्घटो द्रव्यमिति वाक्यं पटस्य द्रव्यत्वं निषेधति। नन्वेवमिदंशब्दागृहीतस्य ब्रह्मणा सह यदैक्यं तत्र नेयं श्रुतिः प्रमाणं स्यात्। तथा च तत्र प्रमाणान्तरं वक्तव्यं स्यादिति चेत्—अनुमानं प्रमाणमिति गृहाण। श्रुत्या हीदंशब्दगृहीतस्य जगतो ब्रह्मैक्ये बोधिते तद्दृष्टान्तेनेदंशब्दागृहीतस्यापि जगदन्तःपातिनो ब्रह्मणा सहैक्यस्यानुमानप्रमाणेन साधनात्। किंच यथा स्वाध्यायोऽध्येतव्य इत्यध्ययनविधेरन्यत्र स्वाध्याय इव स्वाध्यायोऽध्येतव्य इत्येतस्मिन्स्वाध्यायरूपे स्ववाक्येऽप्युद्देश्यतावच्छेदकाक्रान्तत्वाविशेषेण यथा प्रवृत्तिर्भवति तथेदं सर्वं यदयमात्मेति ब्रह्मैक्यबोधकश्रुतेरन्यत्र जगतीव स्ववाक्येऽपि स्ववाच्यार्थभूते ब्रह्मैक्येऽपि च प्रवृत्तिरप्रत्यूहैव भवति। तथा च 'अ इ उ ण्' सूत्रे शब्दकौस्तुभे भट्टोजीदीक्षितैरुक्तं 'स्वाध्यायोऽध्येतव्यः, नेह नानाऽस्ति किंचन' इत्यादीनां वाक्यानां स्वस्मिन्नपि यथा प्रवृत्तिः' इति।

तथा च जीवब्रह्मैक्यस्य जगद्ब्रह्मैक्यस्य चेदं सर्वं यदयमिति श्रुत्या ब्रह्मणा सहैक्यं सिध्यत्येव। ननु 'यतो वाचो निवर्तन्ते' इति श्रुतिर्ब्रह्मणः श्रुतिप्रमाणाविषयत्वं बोधयति। तथा च तादृशब्रह्माभिन्नं यज्जीवब्रह्मैक्यं जगद्ब्रह्मैक्यं च तस्येदं सर्वमिति श्रुतिप्रमाणविषयत्वं कथं भवद्भिरुच्यत इति चेन्न। आनुपूर्व्यैव सिद्धत्वात्। जीवब्रह्मैक्यस्य जगद्ब्रह्मैक्यस्य च यद्ब्रह्मणा सहैक्यं तत्सिद्ध्यनन्तरं हि भवतामयमाक्षेपो न तु ततः प्राक्। जीवब्रह्मैक्यस्य जगद्ब्रह्मैक्यस्य च यद्ब्रह्मणा सहैक्यं ततः प्राक्तु तस्यैक्यस्य श्रुतिप्रमाणविषयत्वे न किंचिद्बाधकं पश्यामः। किंच प्रमाणावेद्यमपि वस्तु समारोपितेन रूपान्तरेण प्रमाणवेद्यं भवति। यथा तत्तद्देवताप्रतिमाः। साधारणमनुष्याणामप्रत्यक्षा अपीन्द्रादयो देवाः प्रतिमारूपेण प्रत्यक्षा भवन्ति। तथा प्रमाणाविषयमपि ब्रह्म सत्यत्वादिगुणैरारोपितैः शब्दप्रमाणवेद्यं भवति। यत्तु ब्रह्म स्वसंवेद्यं चेद्ब्रह्मज्ञानं ब्रह्मणोऽस्त्येव। ब्रह्माभिन्नस्य जीवब्रह्मैक्यस्य जगद्ब्रह्मैक्यस्य च ज्ञानं ब्रह्मणोऽस्त्येव। तथा चार्थादेव ब्रह्माभिन्नेन जीवेनैतत्सर्वं ज्ञातमेव भवति। ततश्च ज्ञातस्तम्भं प्रति स्तम्भबोधकवाक्यवच्छास्त्रं निष्प्रयोजनं स्यादित्युक्तं तन्न। जीवस्य स्वस्वरूपाभिधानोत्तरं शास्त्रस्य निष्प्रयोजनत्वमिष्टमेव। कृतकार्यत्वात्। यदा च जीवो न ज्ञानी संवृत्तस्तदानीमप्राप्ते शास्त्रमर्थवदिति न्यायानुसारेण शास्त्रस्य सप्रयोजनत्वं भवत्येव। एतेन यथाऽन्धकारे त्वगिन्द्रियेण घटे ज्ञाते तद्गतं रूपं तदानीं न ज्ञायते तदा च ज्ञातेऽपि घटे रूपावेदकस्यार्थवत्त्वं दृश्यते। तथा जीवेन ब्रह्मणि ज्ञातेऽपि तस्यैक्यं न ज्ञायेत चेच्छास्त्रमैक्यविदकमर्थवत्स्यात्। न तु तथाऽस्ति। ब्रह्मणि ज्ञाते तदैक्यज्ञानस्यावर्जनीयत्वात्। तथा च शास्त्रं निष्प्रयोजनमेवेति द्वैतिकल्पितमपास्तम्। अज्ञानिषु शास्त्रसाफल्यस्य दर्शितत्वात्। शास्त्रेणाज्ञाननिवृत्तौ सत्यां ज्ञानरूपब्रह्मस्वरूपभूतमैक्यं स्वत एव सिध्यति। सिद्धं तु निवर्तकत्वाच्छास्त्रस्येत्यनेनैतदेव बोध्यते। तथा च शास्त्रमज्ञानं निवर्तयतीति सिद्धम्।

यत्तु ब्रह्म स्वप्रकाशं चेत्तस्य कथमज्ञानेनाऽऽवरणं भवति। अथ तथाविधस्यापि ब्रह्मण आवरणमज्ञानेन भवति चेत्तस्याज्ञानस्य कथं नाशः स्यात्। दीपेन ह्यन्धकारो दूरी क्रियते। दीप एवान्धकारेणाऽऽवृतश्चेत्कथं सोऽन्धकारावृतो दीपोऽन्धकारं दूरीकर्तुं प्रभवेत्। किंच ब्रह्मप्रकाशे सत्यज्ञानस्य नाशः। अज्ञानस्य च नाशे सति ब्रह्मप्रकाश इत्यन्योन्याश्रयः। तस्माद्द्वैतिमतं

युक्तमित्युक्तम्। तदपि न। स्वप्रकाशस्य ब्रह्मण आवरणमज्ञानेन न संभवतीति सत्यमेव। किंत्वज्ञानेन तेन जीवस्वरूपमावृतम्। यथा घनच्छन्नदृष्टिर्घनच्छन्नमर्कं मन्यते तद्वदेव जीवोऽयं स्वयमज्ञानेनाऽऽवृतः सन्ब्रह्माऽऽवृतमिति मन्यते। यश्च ब्रह्मप्रकाशे सत्यज्ञानस्य नाशः, अज्ञानस्य नाशे च सति ब्रह्मप्रकाश इत्यन्योन्याश्रयः प्रदर्शितः सोऽपि न संभवति। अज्ञाननाशस्य ब्रह्मप्रकाशकारणत्वाभावात्। एतच्चाज्ञानं भावरूपं त्रिविधम्—वर्धिष्णु क्षयिष्णु समपरिमाणेन परिणामि चेति। तत्र वर्धिष्णु परिणामि च वृद्धिपरिणामशक्तिसत्ताकाले क्षयिष्णवपि चाऽऽत्मविज्ञानं प्रतिबध्नाति। यदा तु केवलं क्षयशक्तिमत्तदाऽऽत्मविज्ञानस्य न तत्प्रतिबन्धकं भवति। तथा च तदानीं तादृशाज्ञानसत्त्वेऽप्यात्मविज्ञानोदय इति नान्योन्याश्रयः। अज्ञानस्य केवलक्षयशीलत्वं च कायपरिशुद्ध्या संजायते।

यत्तु तत्त्वमस्यादिमहावाक्याद्ब्रह्मज्ञानं जायत इति वक्तव्यम्। तच्च न संभवति। तथा सति ब्रह्मज्ञानस्यानित्यत्वप्रसङ्गः। ज्ञानस्य चानित्यत्वे ब्रह्मणोऽप्यनित्यत्वापत्तिः। ब्रह्मणो ज्ञानस्वरूपत्वस्याद्वैतिभिरभ्युपगमात्। तथा चानित्यं ब्रह्मेति स्वीकार्यमथवा महावाक्यस्याकिंचनकारित्वं स्वीकार्यं भवतीति चेत्—नायं दोषः। यथा सौरं तेजः सदा सर्वत्र च सममेवाऽऽस्ते। किंतु घनच्छन्नदृष्टिस्तत्र मान्द्यमारोपयति। आतपे संचरंस्तैक्ष्ण्यमारोपयति। यथा च प्रवयास्तीक्ष्णतां मन्यते न तथा बालः। तदपेक्षयाऽपि पशुः। एवमेकरूपेण सदाऽवस्थायिन्येव तस्मिंस्तेजसि तत्तद्व्यक्त्या स्वस्वानुगुणा धर्मास्तत्राऽऽरोप्यन्ते तथैव ज्ञानस्वरूपे नित्ये स्वप्रकाशे सर्वदैकरूपेण प्रकाशमाने कूटस्थे ब्रह्मण्यपि जीवैरज्ञानिभिर्धर्मा आरोप्यन्ते। तथा च यथा यथा महावाक्यादिभिरधिकः संस्कारो जायते तथा तथा परमात्माऽधिकं प्रकाशते। तदेवाज्ञानिभिर्महावाक्याज्ज्ञानं जायत इत्युच्यते। एतेन महावाक्यस्य जीवब्रह्मैक्यरूपसिद्धार्थबोधकत्वेनाप्रामाण्यमिति परास्तम्। जीवब्रह्मैक्यस्य सिद्धत्वेन तद्बोधकत्वेऽपि यथा महावाक्यस्योपयोगस्तथा पूर्वं प्रदर्शित एव। अनुपयुक्तत्वं ह्यप्रामाण्ये हेतुः स्यान्नाम। उपयुक्तश्चेदसत्योऽप्यर्थः स्वी क्रियत एव। तथा च हरिः—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥ इति।

यत्तु स्वप्रकाशे सूर्येऽन्धकारस्येव ज्ञानरूपे स्वप्रकाशे ब्रह्मण्यज्ञानस्य प्रवेश एव न संभवति। तथा चाद्वैतिनां वेदान्तशास्त्रे विषयप्रयोजनाधिकारिसंबन्धरूपमनुबन्धचतुष्टयं न संभवति। अज्ञातो हि विषयः। अज्ञाननिवृत्तिः प्रयोजनम्। अज्ञाननिवृत्तीच्छुरधिकारी। एतदनुबन्धत्रयमज्ञानघटितमेवेति यत्राज्ञानमेवाश्रितां नोपैति तत्र तद्घटितमधिकारित्रयमेतत्कथं वक्तुं शक्येत। एवमेतेषां त्रयाणां शशविषाणायमानत्वे यथा तादृशयोर्विषाणयोर्मिथः संबन्धो दुर्वचस्तथाऽत्रापि त्रयाणां तेषामनुबन्धानां मिथः संबन्धो दुर्वचो भवति। एवमनुबन्धचतुष्टयासंभवेऽर्थादेव शास्त्रमनुपादेयं भवतीति।

अत्राऽऽवक्ष्महे। सर्वोऽयं व्यूहो मूलबन्धशैथिल्याद्विदीर्ण एव भवति। स्वप्रकाशे ज्ञानरूपे ब्रह्मण्यज्ञानस्यासंभवेऽपि जीवे तत्संभवस्य प्रागेवोक्तत्वात्। अत्राज्ञानमूलकं जीवत्वं जीवाश्रितं चाज्ञानमित्यन्योन्याश्रयो न शङ्कनीयः। नहीदमज्ञानं जीवमाश्रित्योत्पन्नमित्युच्यते। अज्ञानस्यानादित्वाभ्युपगमात्। विचित्रार्थसर्गकरी मायेत्येतदेवोच्यते। अज्ञानं चैतन्नानाविधशक्तियुतम्। सृष्ट्यारम्भे तदैक्षतेत्येवं वर्णितेक्षणशक्तिरप्येतदन्तर्गतैव। यथाऽस्यानिर्वचनीयस्याज्ञानस्य नानाविधाः शक्तयस्तासां सर्वासां सर्वत्रोपयोगो भाव्य इति न नियमः। किंतु यथासंभवं व्यवस्था। अनादिरज्ञानशक्तिश्चेयमात्माश्रयेण नरीनर्ति। सा चाऽऽकाशवाय्वादिक्रमेण ब्रह्माण्डं प्रदर्शयति। इयं विक्षेपशक्तिरित्युच्यते। आवरणशक्तेस्तु न तत्रोपयोगः। परमात्मनस्तदायत्तत्वाभावेन तत्र तस्याः शक्तेरनुपयोगात्। उक्तशक्तिविशिष्टो हि परमात्मेत्युच्यते। उक्तशक्तिरहिता केवला चित्तु शुद्धेत्युच्यते। नतेनं चास्यानाद्यज्ञानस्याव्याकृतस्य व्याकृतरूपेण परिणामः। व्याकृतं चाऽऽदौ सूक्ष्मं ततः स्थूलं ब्रह्माण्डं दृश्यते। तत्र सूक्ष्मसृष्ट्यन्तर्गते सात्त्विकेऽन्तःकरणे प्रतिबिम्बितं चैतन्यं जीव इत्युच्यते। तथा चाज्ञानपरिणामभूतान्तःकरणोपाधियुतो जीवोऽर्थादेवाज्ञानायत्त इति तस्य जीवस्य मूलस्वरूपमज्ञानेन स्वकीयावरणशक्त्याऽऽवृतं भवति। आवृतोऽप्ययं जीवोऽनावृत इव स्वमवगच्छन् ब्रह्माऽऽवृतमिति भ्रमेण मन्यते। तदुक्तम्–

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते सोऽतिमूढः॥ इति।

यत्तु द्वैताभिमानिन आहुः–अद्वैतिनां मते जीवत्वमज्ञानकल्पितं चेदर्थादेव तन्मिथ्या भवति। एवं जीवत्वस्य मिथ्यात्वे जीवब्रह्माभेदोऽपि मिथ्या भवति। जीवब्रह्माभेदघटकस्य जीवस्य मिथ्यात्वात्। तथा चार्थादेव जीव-

ब्रह्मणोर्भेदः सिध्यति । परस्परविरुद्धयोः पदार्थयोरेकस्य मिथ्यात्वे परस्य सत्यत्वमर्थादेव सिध्यति। यथा दरिद्रत्वधनिकत्वयोर्मिथो विरोधाद्ग्रामगतं दारिद्र्यं मिथ्या चेत्तस्मिन्दारिद्र्यविरोधि धनिकत्वं सत्यमित्येव सिध्यति । तथा प्रकृते भेदाभेदयोः परस्परविरुद्धतया जीवब्रह्मणोरभेदस्य मिथ्यात्वेऽङ्गीकृते तद्विरुद्धस्य जीवब्रह्मणोर्भेदस्य सत्यत्वं स्यादेवेति ।

तदेतत्प्रलापमात्रमिति शिष्टैरनादरणीयमेव । तुल्यन्यायाज्जीवस्य मिथ्यात्वे जीवब्रह्मभेदोऽपि मिथ्या भवति । जीवब्रह्मभेदघटकस्य जीवस्य मिथ्यात्वात्। तथा चार्थादेव त्वदुक्तरीत्यैव जीवब्रह्माभेदः सिध्यतीति कथं न पर्यालोचयेः । यच्चोक्तं जीवस्य मिथ्यात्वे तद्घटितस्य जीवब्रह्माभेदस्य मिथ्यात्वमर्थादेव सिद्धमिति तादृशाभेदविरुद्धस्य भेदस्य सत्यत्वं सिद्धमिति । तदप्यसत् । न हि जीवस्य मिथ्यात्वे कल्पितेऽपि तद्घटितो जीवब्रह्माभेदस्तेन मिथ्या भवति । यस्य हि वस्तुनो येन यादृशं स्वरूपं प्रकल्पितं तत्सत्यं वा मिथ्या वा बौद्धं वा स्वाप्निकं वा प्रातिभासिकं वा तत्तथैव स्वीकृत्य तद्घटितोऽर्थो वर्णनीयो भवति । न हि शशविषाणस्यासत्यत्वे शशविषाण नास्तीति शशविषाणप्रतियोगिको निषेधोऽपि शशविषाणघटितत्वादसत्यो भवति। अन्यथा सद्वैतिमतं खण्डनीयत्वेन भवतोपक्षिप्तमिति भवता तस्याद्वैतमतस्यासत्यत्वं कल्पितमिति तद्घटितं तत्खण्डनमप्यसत्यमिति कुतो न कल्प्यते। तथा तैरेव यत्प्रलपितं परस्परविरुद्धयोः पदार्थयोरेकस्य मिथ्यात्वे परस्य सत्यत्वमर्थादेव सिध्यति । यथा दारिद्र्यधनिकत्वयोर्मिथो विरोधाद्ग्रामगतं दारिद्र्यं नष्टं चेत्तस्मिन्दारिद्र्यविरोधि धनिकत्वमर्थादेव सिध्यतीति । तत्रोच्यते । शब्दमात्रेणायं न्यायस्तैः प्रदर्शितः, न त्वर्थतोऽवगतः प्रतीयते । परस्परविरुद्धयोः पदार्थयोरेकस्य यन्मिथ्यात्व तद्यदि तदितरं पदार्थं कक्षीकृत्य तत्सहायेनाऽऽपाद्यते चेदेव तत्रापरस्य सत्यत्वं सिध्येत् । तदेव हि तत्र बीजम् । न हि देवदत्तस्य दारिद्र्य देवदत्तमरणान्नष्टमिति मृतस्य तस्य धनिकत्वं कोऽपि प्रत्येति । प्रकृते च यज्जीवब्रह्मणोरभेदस्य मिथ्यात्वं द्वैतिभिः प्रतिपादितं तज्जीवस्याज्ञानकल्पितत्वेन मिथ्यात्वाज्जीवब्रह्माभेदस्यापि मिथ्यात्वमापादितमथवा ब्रह्मभिन्नस्य मिथ्यात्वमद्वैतिप्रतिपादितं कक्षीकृत्य स्वयं च जीवब्रह्माभेदस्य ब्रह्मभिन्नत्वं प्रकल्प्य तस्याभेदस्य ब्रह्म-

भिन्नत्वान्मिथ्यात्वमापादितं ननु द्वैतस्य सत्यत्वं प्रसाध्य तत्सहायेन प्रतिपादितमिति कुतोऽत्र तन्न्यायावकाश इत्यूहनीयं सूरिभिः ।

यत्तु जीवब्रह्मैक्यं सिद्धमसिद्धं वा । ब्रह्मस्वरूपत्वात्सिद्धमेवेति चेत् । महावाक्यस्य विषयाभावः । असिद्धो ह्यर्थः साध्यमानतया शास्त्रस्य विषयो भवति । असिद्धं चेन्महावाक्येन तत्साधनीयमिति महावाक्यस्य विषयलाभः स्यात्तथाऽपि महावाक्येन निष्पाद्यं जीवब्रह्मैक्यमुत्पन्नत्वाद्यदा कदाऽपि नष्टं स्यादेवेति मुक्तस्य पुनरावृत्तिप्रसङ्ग इत्युक्तं तदविचारितरमणीयम् । जीवब्रह्मैक्यं महावाक्येन साध्यते इत्यस्य नोत्पाद्यत इत्यर्थः । किंतु पूर्वसिद्धमेव केवलं महावाक्येन ज्ञाप्यत इति । तथा च न महावाक्यस्य निर्विषयत्वं नापि मुक्तस्य पुनरावृत्तिप्रसङ्गः । नहि जीवब्रह्मैक्यं पूर्वसिद्धमित्येतावता तज्ज्ञातं भवति ।

यदप्याहुरज्ञाननिवृत्तिर्मोक्ष इत्यद्वैतिनां मतं न संभवति । अज्ञाननिवृत्तिरात्मस्वरूपा तदन्या वा । आत्मस्वरूपा चेदात्मा सिद्ध एवेत्यज्ञाननिवृत्तिरप्यात्मस्वरूपत्वात्सिद्धैव वक्तव्या भवति । सिद्धा चेत्तदर्थं शास्त्रारम्भो न युक्तः । लोके हि मूढतमोऽपि मनुजः सिद्धपदार्थसाधनाय प्रयतमानो न केनापि दृष्टः । कथं वा सिद्धमेव साधयितुं शक्यते । अथाज्ञाननिवृत्तिरात्मस्वरूपादन्येति चेत्तस्या मिथ्यात्वं स्यात् । आत्मभिन्नत्वात् । तदाऽपि च मिथ्याभूतार्थसंसिद्धये शास्त्रारम्भो न युक्त इति तदप्यसमञ्जसम् । अज्ञाननिवृत्तिरात्मस्वरूपादन्येति न वदामः । किंतु प्रतिजीवं सा नानाविधा । आपेक्षिकं तस्यास्तत्तज्जीवं प्रत्यसिद्धत्वम् । तथा च यस्य यावदसिद्धा सा प्रतीयते न तावत्तां स सिद्धात्मस्वरूपभूतां मन्यते । तदानीं च तदर्थं शास्त्रारम्भो युक्त एव भवति । मिथ्याभूतार्थसंसिद्धये च नात्र शास्त्रारम्भः । किंतु मिथ्याभूतत्वेन प्रतीयमानस्यार्थस्य मिथ्यात्वाभावप्रतिपत्त्यर्थं शास्त्रमिति गृहाण ।

यत्तु ब्रह्मज्ञानेनाज्ञाननिवृत्तिः, तदर्थं च शास्त्रारम्भः । तथा च जीवेन खलु ब्रह्म ज्ञातव्यं भवति । परं त्वेतदद्वैतिनां मते कथं संभवेत् । तेषां मते हि ब्रह्म ज्ञानरूपम् । ब्रह्माभिन्नो जीवश्च ज्ञानरूपः । ततश्च ज्ञानेनैव ज्ञानं ज्ञातव्यमिति फलितम् । तच्च न संभवति । स्वस्य कर्तृकर्मविरोधादित्युक्तं तत्तुच्छम् । ब्रह्म ज्ञानरूपमिति सत्यमेव । तथा जीवोऽपि ब्रह्माभिन्नो ज्ञानरूप इति सत्यमेव । किंतु न यावदेतादृशं ज्ञानं तावत्तदर्थ एव शास्त्रारम्भः । तथा च ब्रह्म ज्ञानभिन्नं ज्ञानविषयमिति यावत्•

तीयते तथा जीवोऽपि ब्रह्मभिन्नः स च ज्ञानाश्रय इति यावत्प्रतीयते तावत्तादृश-प्रतीतिनिवृत्त्यर्थमेव शास्त्रमारभ्यते। ब्रह्मज्ञानार्थं शास्त्रमिति यदुच्यते तस्यैतदेव तात्पर्यं बोध्यम्। तथा च वस्तुतो ज्ञानाविषयस्य ब्रह्मणो ज्ञानविषयत्वप्रतीतिर्या भवति ब्रह्मविषयकं ज्ञानमिति स भ्रम एव। स एव च शास्त्रेण दूरी क्रियते। ननु यदि ब्रह्मविषयकं ज्ञानमिति प्रतीतिर्भ्रमस्तर्हि स्तनंधयस्य ब्रह्मविषयकं ज्ञानं नास्तीति भ्रमो नास्त्येव। तथा च स तदवस्थायां किं मुक्तो भवति। नैतदेवम्। ब्रह्मविष-यकं ज्ञानमिति प्रतीतिर्न भ्रमस्वरूपम्। किंतु ज्ञाने ब्रह्मणो विषयत्वप्रतीतिभ्रमः। तथा च ज्ञानमावश्यकमेव। केवलं तत्र कस्यापि विषयस्य प्रतीतिर्मा भूदिति हि वस्तुस्थितिः। शास्त्रेण च या तत्र ज्ञाने ब्रह्मणो विषयता प्रकल्पिता सेतरेषां विष-याणां ततोऽपसारणार्थम्। यथा मलिने पात्रे पूर्वसंसृष्टमलापसारणार्थं भस्मादिर-धिको मलस्तत्रोपलिप्यते पश्चाज्जलेन सर्वविधो मलोऽपसारितो भवति तद्वत्। ततश्च शास्त्रेणाखिलविषयाणां ज्ञानतो निवृत्तौ ब्रह्म स्वयमपि विषयरूपेण निवर्तते। इयं च विषयरूपेण निवृत्तिर्ज्ञानतः पृथग्भावेन या ब्रह्मणो नियृत्तिस्तन्मूलिकैव। तथा च ब्रह्मरूपं ज्ञानं सिद्धम्। इयमेव मोक्षावस्था। तथा च मोक्षावस्थायामा-त्मनो न ज्ञानविशिष्टत्वं नापि च परमार्थतया ज्ञानोपलक्षितत्त्वम्।

यत्तु द्वैतिभिरुक्तम्—अज्ञाननिवृत्तिरात्मस्वरूपादन्या चेदात्मनो यदन्यत्तदज्ञानम-ज्ञानकार्यं वा भवति। तथा चाज्ञाननिवृत्तेरज्ञानत्वे सर्वथा निवृत्तिरेवाज्ञानस्य न घटते। अज्ञाननिवृत्तेरज्ञानकार्यत्वे च घटद्वारेण मृत्तिकायाः सत्त्वमिव कार्यद्वारे-णाज्ञानस्य सत्त्वं तदवस्थमेवेति कथमज्ञाननिवृत्तिरूपो मोक्षः स्यादिति।

अत्रोच्यते। अज्ञाननिवृत्तिमात्मस्वरूपादतिरिक्तां प्रकल्प्य यानि दूषणानि प्रद-र्शितानि तानि नैव विचारसहानि। अज्ञाननिवृत्तिरात्मनःसकाशादन्येत्यस्मा-भिरनभ्युपगमात्। यच्चाज्ञाननिवृत्तेरात्मस्वरूपत्वाभ्युपगम आत्मनः सिद्धत्वेना-ज्ञाननिवृत्तेः सिद्धत्वात्तदर्थं शास्त्रारम्भो न युज्यत इति दूषणमुक्तं तदनुप-दमेव दत्तोत्तरम्। किंच तदज्ञानविजृम्भितमेव। अज्ञाननिवृत्तिरात्मस्वरूपेत्येतत्ता-त्पर्यानाकलनात्। तथा हि—कस्यापि वाक्यस्य विधौ निषेधे वैकत्रैव तात्पर्यं न द्वयोरर्थयोः। 'पृथिव्यां रूपम्' इति वाक्यस्य विधावेव तात्पर्यं न पृथिवीतोऽन्य-त्र रूपस्य निषेधे न वा पृथिव्यां रूपादन्यस्य निषेधे। तेन पृथिव्यां रूपमिति वाक्यस्य जले रूपमित्यनेन, पृथिव्यां रस इत्यनेन च न विरोधः। एवमाकाशे न रूपमित्यस्य निषेध एव तात्पर्यं नाऽऽकाशादन्यत्र रूपस्य विधौ नवाऽऽकाशे

रूपादन्यस्य विधौ। तेनाऽऽकाशे न रूपमित्यस्य वायौ न रूपमित्यनेनाऽऽकाशे न रस इत्यनेन च न विरोधः। यत्र तु विधिवाक्यत्वेन प्रतीयमानस्यापि विधेः सिद्धत्वादिना विधौ तात्पर्यं न विवक्ष्यते तत्राप्येकत्र निषेध एव तस्य तात्पर्यम्। एवं निषेधवाक्यत्वेन प्रतीयमानस्यापि वाक्यस्य क्वचिद्विधावेकत्रैव तात्पर्यं बोध्यम्। एवमद्वैतवादिनां या 'अज्ञाननिवृत्तिरात्मस्वरूपा' इत्युक्तिः सा विधिवाक्यत्वेन यद्यपि बाह्यतः प्रतीयते तथाऽप्यन्ततस्तस्याः 'अज्ञाननिवृत्तिरात्मव्यतिरिक्ता नेति निषेध एव तात्पर्यमवसीयते। तेन तस्या उक्तेर्विधौ तात्पर्याभावान्नाऽऽत्मनः सिद्धत्वेन तस्या अज्ञाननिवृत्तेः सिद्धत्वमापादनीयम्। जगन्मूलभूतभावरूपाज्ञानसंबन्धेन च 'न सन्नासन्न सदसद्विरोधात्। किंतु सदसदनिर्वाच्यमेतत्' इति यद्वदन्ति तत्तात्पर्यमेवमेवोहनीयम्। तथा हि। अज्ञानकार्यस्यास्य प्रपञ्चस्य भावरूपेण प्रतीयमानत्वात्तदज्ञानं भावरूपम्। तस्य च सत्त्वासत्त्वसंबन्धेन विचारे क्रियमाणे चत्वारः कल्पाः प्रादुर्भवन्ति। अज्ञानं सत् अज्ञानमसत् एतदुभयमपि विधितात्पर्यकमिति प्रथमः कल्पः (१)। अज्ञानं सदिति विधितात्पर्यकमज्ञानमसदिति निषेधतात्पर्यकमिति द्वितीयः(२)। तद्विपर्ययेण चाज्ञानं सदिति निषेधतात्पर्यकमज्ञानमसदिति विधितात्पर्यकमिति तृतीयः (३)। अज्ञानं सत् अज्ञानमसत् एतदुभयमपि निषेधतात्पर्यकमिति चतुर्थः कल्पः (४)। एषु कः संभवति कश्च नेतीदानीं प्रदर्श्यते। तत्र प्रथमः कल्पो न संभवति। अज्ञानं न सत्। विधितात्पर्यकमज्ञानं सदिति न तादृशाज्ञानसंबन्धेन वक्तुं शक्यमित्यर्थः। आत्मा वा इदमेक एवाग्र आसीत् (ऐ० १) इति श्रुतिविरोधात्। तथाऽज्ञानं नासत्। विधितात्पर्यकमेवाज्ञानमसदिति च न तादृशाज्ञानसंबन्धेन वक्तुं शक्यमित्यर्थः। तत्कार्यस्यास्य जगतः सद्रूपेण प्रतीयमानत्वात्। एवं न सन्नासदिति प्रथमः कल्पो निरस्तः। 'न सदसद्विरोधात्' इत्यनेन द्वितीयतृतीयकल्पौ निरस्तौ। अज्ञानं सदित्यनेन विधितात्पर्यकेणाज्ञानस्य सत्त्वे विहिते कथं तद्विरुद्धमज्ञानमसदित्यनेन निषेधतात्पर्यकेण सत्त्वं निषिद्धं स्यात्। तथाऽज्ञानं सदित्यनेन निषेधतात्पर्यकेणाज्ञानस्यासत्त्वे निषिद्धे कथं तद्विरुद्धमज्ञानमसदित्यनेन विधितात्पर्यकेणाज्ञानस्यासत्त्वं विहितं स्यात्। एवं द्वितीये तृतीये च कल्पे निरस्ते सदसदनिर्वाच्यमिति चतुर्थः पक्षः स्वीक्रियते। तत्र ह्यज्ञानं सदित्यनेन निषेधतात्पर्यकेणाज्ञानस्यासत्त्वं निषिध्यते न तु सत्त्वं विधीयते। येन 'आत्मा वा०' इति श्रुतिविरोधः स्यात्। तथाऽज्ञानमसदित्यनेनापि निषेधतात्पर्यकेण सत्त्वं

केवलं निषिध्यते। न त्वसत्त्वं विधीयते। येन तत्कार्यस्य जगतोऽसत्त्वेन प्रतीतिः स्यात् । नन्वेतादृशस्याज्ञानस्य शब्देन सुवचत्वेऽपि मानसिककल्पनायां 'ईदृशं तत्स्यात्' इत्येवं तस्य कोऽप्याकारो मनोवृत्तिं नाऽऽरोहतीति चेत्– अत एवानिर्वाच्यमित्युक्तम्। अत एव चैतदज्ञानं तत्कार्यभूतं सर्वं च जगत् 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' ( गौ० का० ) इत्यत्र मायाशब्देन व्यपदिश्यते । *अघटितघटनापटीयसी हि माया* । अनिर्वाच्यत्वं च मायाया भूषणमेव न दूषणमिति बोध्यम् ।

*यत्तु द्वैतिभिर्विष्णोः सर्वोत्तमत्वे, जीवब्रह्मणोर्भेदे, जीवब्रह्मैक्यनिषेधे* च किं प्रमाणमिति प्रश्नमुद्भाव्य तत्र प्रमाणत्वेनेमे गीताश्लोका उदाहृताः–

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । ( गी० १५ । १६ )

इति । एतत्सिद्धोऽर्थश्चेत्थमुक्तः–येषां नश्वरं शरीरं तादृशा ब्रह्मरुद्रेन्द्रगणपत्यादयोऽत्र क्षरशब्देनोच्यन्ते। अनश्वरशरीरा लक्ष्मीरत्राक्षरशब्देनोच्यते। परमात्मा विष्णुस्तु ताभ्यां भिन्न इति । अत्रोच्यते । द्वाविमावित्यनेन क्षराक्षरद्वैविध्यं प्रतिपाद्योत्तरार्धे क्षराक्षरशब्दार्थः स्वयमेवोक्तः । तथाच तदनुरोधेन क्षर शब्देन भूतानामक्षरशब्देन चेतनस्य च ग्रहणमेव युक्तम्। नात्र ब्रह्मरुद्रादीनां लक्ष्म्याश्च नामापि दृश्यते। लक्ष्म्या अनश्वरो देहो ब्रह्मादीनां च नश्वर इत्यत्र च न किंचित्प्रमाणं प्रदर्शितम्। तथा च तद्वैपरीत्येनाथवा तेषां सर्वेषामेव नश्वरो देह इति सर्वेषामनश्वरो देह इति वा कुतो नोच्यते। तथा चात्र क्षरशब्देन भूतानामक्षरशब्देन चेतनस्योत्तमपुरुषशब्देन परमेश्वरस्य च ग्रहणमित्येव स्वीकार्यम् । तच्चाद्वैतिमतेऽप्यविशिष्टमेव भवति । न चाद्वैतिमते देहचेतनविभागाभावात्क्षराक्षर विभागो नोपपद्यत इति वाच्यम्। वस्तुतः परमार्थदशायां तादृशविभागाभावेऽपि प्रमाणप्रमेयव्यवहारे प्रवृत्ते व्यावहारिकभेदस्य सत्त्वात् । परमार्थदशायां तु यत्र वेदा अवेदा इत्येवं श्रुतिरपि स्वस्य सत्त्वं नाभ्युपैति दूरत एव कथा प्रमाणप्रमेयव्यवहारस्य ।

यच्च–इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः (का. १।३।१०)

इति श्रुतिर्द्वैतिभिः प्रमाणमित्युदाहृता । तत्र यदि प्रमाणमित्यस्याप्रमाणं नेत्यर्थस्तर्हि विवाद एव नास्ति । यदि च विष्णोः सर्वोत्तमत्व इयं प्रमाणमित्यर्थस्तर्हि सोऽर्थो न लभ्यते । अत्र विष्णुपदाभावात् । पुरुषपदमात्रं तत्र दृश्यते । परमपुरुषश्च सर्वैरप्यास्तिकैः स्वस्वमतानुसारेण स्वी क्रियत एव । यच्चोक्तं महत्पदेनात्र महत्तत्त्वाभिमानी ब्रह्मदेव उच्यते । तदपेक्षया परा लक्ष्मी देवी । सा चाव्यक्ततत्त्वाभिमानिनीत्यव्यक्तशब्देनाभिधीयते । ताहशलक्ष्मीदेव्यपेक्षया परश्च विष्णुरेवेत्युक्तं तदपि न। ब्रह्मदेवलक्ष्मीशब्दप्रयोगोऽत्र नास्ति। इन्द्रियाद्यभिमानिन्यो देवताश्च सर्वैरेवाऽऽस्तिकैः स्वी क्रियन्त एव । अत्र श्रुतौ केवलं तासां पौर्वापर्यं प्रदर्श्यते । तथा चेयं सर्वसाधारणी श्रुतिर्नैव केनाप्यास्तिकेन स्वकीयमतसाधकत्वेन पुरस्कार्येत्यास्तां तावत् । तदेवं द्वैतिमतस्य श्रौतत्वं कथमपि सिद्धं न भवति ।

यश्चायं द्वैतिना साकं वादाय प्रवृत्तमद्वैतवादिनं प्रति माध्वादिनो द्वैतिनानुयोगः–' भवन्तोऽद्वैतमतं गृहीत्वा वादाय प्रवृत्ता इत्येतावतैव भवद्भिर्द्वैतमाश्रितं भवति । यतो भवदपेक्षया भवतां मतं भिन्नम् भवन्तश्च ताहशमतापेक्षया भिन्नाः, तदुभयापेक्षयाऽपि प्रतिवादिनो वयं भिन्नाः, अस्माकं मतं च भिन्नम्, वादश्च सर्वापेक्षयाऽपि भिन्नः । एताहशमनेकविधं भेदमुपजीव्यैव भवतामियं प्रवृत्तिरिति तद्विरुद्धोऽयं वाद एव न संभवतीति । अत्राऽऽचक्ष्महे । नाद्वैतवादिनामयं दोषोऽपि तु द्वैतिनामेव । परस्परमविद्वद्विनोद्वयोर्वादिनोर्हि मध्ये केनाप्येकेनापरस्य य आक्षेपः क्रियते स तस्यापरस्य मतं गृहीत्वैव कर्तव्यो भवति। न तु स्वमतेन । नहि नास्तिकं चार्वाकं खण्डयितुं प्रवृत्तेनाऽऽस्तिकेनादृष्टोऽर्थः स्वर्गादिः श्रुतिप्रमाणेन साधयितुं शक्यते । श्रुतिप्रमाणस्य चार्वाकेणानङ्गीकारात् । तथा च द्वैतिनामेव द्वैतमेवोपजीव्य या वादाय प्रवृत्तिर्दृश्यते सैव न संभवति ।

यच्च द्वैतवादिनोऽद्वैतवादिनं प्रत्याहुः–अद्वैतं नाम न द्वैतमद्वैतम् । तथा चेदमद्वयं द्वैताद्भिन्नमभिन्नं वा। उभयथाऽपि द्वैतसिद्धिः । आद्ये द्वैताद्भिन्नं चेद्भिन्ने भेदाभावादिति भेदः स्वीकृतः स्यात् । अन्त्ये द्वैतादभिन्नं चेदद्वैतादभिन्नं तद्-

द्वैतरूपमेवेत्येवं भेदः स्वीकृतो भवतीति। किंतु जात्युत्तरत्वान्नेदं चोद्यम्। तथा चोक्तम्।

वादिनो नार्थसिद्धिः स्याज्जात्युत्तरसमाश्रयात्।
मुखं स्यात्पिहितं तेन केवलं प्रतिवादिनः॥ इति।

किंचायं प्रश्नः 'विण्मूत्रयोः पीततायै हरिद्रा लभ्यते कुतः'।

इति प्रश्नवत्परिदृश्यते। तत्र च यथा प्रतिवादिनोत्तरमदत्त्वा प्रष्टारं वादिनं प्रति

'धिङ्मूर्ख—आदौ विचारय स्वान्ते हरिद्रा तादृशी कुतः'

इत्येवं पुनः प्रश्न एव क्रियमाणो दृश्यते तथाऽत्र द्वैतवादिनं प्रत्यप्येवं पुनः प्रश्नः सुवचः। द्वैतमद्वैताद्भिन्नमभिन्नं वा। उभयथाऽपि दोषः। अद्वैताद्भिन्नं चेद्भिन्नं भेदाश्रयमिति स भेदः पुनरद्वैताद्भिन्नोऽभिन्नो वा। तत्रापि भिन्नश्चेदनवस्था। अथ द्वैतमद्वैतादभिन्नं चेदद्वैतादभिन्नस्याद्वैतरूपत्वादद्वैतं स्वीकृतं स्यादिति।

किंच वादे वादिना प्रतिवादिना वा तादृगेव वक्तव्यं यदेतद्विचारयोग्यमित्येवं मध्यस्थ ऊरी कुर्यात्। सांप्रतं तु द्वैतिभिः कृतेषु प्रश्नेषु केचित्प्रश्ना ईदृशा दृश्यन्ते येषां विचारयोग्यता वक्तुरेव स्वस्यापि मनोवृत्तौ न प्रविशति दूर एव मध्यस्थेन तेषां विचारयोग्यतया स्वीकारः। तथा च तादृशस्थले स्वरूपव्याक्रियैव पराक्रिया भवति नोत्तरं दातुमुत्सहे। किंच—

वादो हि निश्चयाय स्यान्न तु वादाय निश्चयः।
कथा तत्त्वबुभुत्सोर्या स वाद इति गौतमः॥

प्रेक्षावन्तः पूर्वं आसन्प्रमाणायत्तनिश्चयाः।
अधुना निश्चयः पूर्वं प्रमाणान्वेषणं परम्॥

इत्युक्तदिशा द्वैतिभिः प्रवर्तितो वादो वादस्वरूपं त्यक्त्वा जल्पे वितण्डायां वा पर्यवस्यति। यतस्तैर्वादात्पूर्वमेव द्वैतं निश्चितम्। तथा चोक्तम्—

तत्त्वस्य निश्चयो वादसमभिक्षिण इष्यते।
द्वैतिनां तु विपर्यासो वादारम्भस्तदुत्तरम्॥
ततः स्यात्पर्यवसितो वादो जल्पवितण्डयोः।
अयोग्यसमयारम्भकोधार्मिकं रूपनिह्नवः॥ इति।

किंचैतादृशाः प्रश्नाः प्रथमतो येषां मनोवृत्तौ प्रादुर्भवन्ति तेषां मतं किमप्यस्तु द्वैतं वाऽस्त्वद्वैतं वाऽस्तु नूनं तेऽभिनिवेशग्रस्ता इति नैव कायपरिशुद्धिस्तेषाम् । तथा च तत्त्वबुभुत्सुत्वाभावात्तत्र तत्त्वबुभुत्सोः कथा वाद इति वादस्वरूपं नास्त्येवेति वादे वादे जायते तत्त्वबोध इत्युक्तरीत्या तत्त्वबोधो दूर एव भवति। अतस्तेषामात्मयाथात्म्यज्ञानासंभवेन मोक्षस्याऽऽशाऽपि न कर्तव्या भवति । अतः प्रथमतः कायपरिशुद्धिः संपादनीया । संपादितायां च कायपरिशुद्धावीदृशप्रश्नानां मनोवृत्तौ प्रवेश एव न भवति । किंच कायपरिशुद्धौ क्वाप्यभिनिवेशाभावेन येन केनापि प्रकारेण श्रुत्यविरोधसंपादने प्रवृत्त्यभाव इति श्रुतेर्यः सरलोऽर्थः स एव तेषां मनोवृत्तावारूढो भवति। तथा च श्रौतमतानुसारिणां तेषां मोक्षमार्गो निकट एवेति विभावनीयम् ।

किंच द्वैतिनां मते मोक्षेऽपि द्वैतमस्त्येव । सर्वोत्तमस्य विष्णोः सामीप्यं तदा भवति । भूयांश्च तदानीं विष्णुसेवानन्द इति हि ते वदन्ति । तत्रेत्थमुच्यते । अयं च भोग विशेष एव । न मोक्षः इति कथमत्र मोक्षशब्दः प्रवृत्तः । यस्मात्कस्मादपि मोक्षश्चेत्सांसारिका जना अपि यस्मात्कस्माच्चिन्मुक्ता एवेति को विशेषः । किंच द्वैतिभिः प्रकल्पितेऽस्मिन्मोक्षे आशाप्रयुक्तं दुःखं दुर्निवारमेव भवति । यतः

आशैव दुःखमूलं स्यादाशैव मनसो मलः ।
आशैव चाऽऽन्तरः शत्रुराशा सर्वविघातिनी ॥

आशा तु तत्र मुक्तानामपि स्यादेव । तदुक्तम्—

स्वस्मादुत्कृष्टमालोच्य जायते चेतनावतः ।
न कस्य तत्पदप्रेप्सा यो न मूर्खो न वा पशुः ।
एवं विष्णुपदप्रेप्सा दुर्वारा द्वैतिनां मते ।
मुक्तानामपि तन्मोक्षस्वरूपं वद कीदृशम् । इति ।

नन्वेवं द्वैतस्य श्रौतत्वाभावेऽपि विशिष्टाद्वैतस्य श्रौतत्वमुपपद्यते । अन्तर्यामिब्राह्मणे हि जीवब्रह्मणोर्जगद्ब्रह्मणोश्च शरीरशरीरिभावः 'यस्याऽऽत्मा शरीरम्' (बृ० ३ । ७ । २२) यस्य पृथिवी शरीरम् (बृ० ३ । ७ । ३) इत्येवं साक्षादेव विधीयते । अतो विशिष्टाद्वैतमतस्य श्रौतत्वं सिध्यति । शरीरशरीरिणोश्च स्थूलोऽहं कृशोऽहं गौरोऽहमित्येवमभेदारोपः प्रसिद्ध एवेति तं गृहीत्वा तत्त्वमसि, इदं सर्वं यदयमात्मा, इति श्रुत्योरुपपत्तिर्भवतीति न तां

रोध आपादनीयः । एवं च विशिष्टाद्वैतमतस्य श्रौतत्वमिति चेत्—भ्रान्तोऽसि । वञ्चितोऽसि द्व्यर्थेन शरीरशब्देन । तथा हि । शरीरशब्दस्य ह्येकोऽर्थो योगेन प्रतीयतेऽपरश्च योगरूढ्या । शीर्यते तच्छरीरमित्यवयवशक्तिमात्रेण विनाशशीलं पृथिव्यादिकं सर्वं जगच्छरीरशब्दार्थं एकः । योगरूढ्या प्रतीयमानश्च कर्मप्राप्यो हस्तपादाद्यवयवयुतो भोगायतनभूतो देहरूपोऽर्थः प्रसिद्ध एव द्वितीयः । तत्र यस्य पृथिवी शरीरमित्यादिश्रुतिविहितं पृथिव्यादीनामात्मशरीरत्वं परिगृह्य शरीरशरीरिणोश्चाऽऽरोपितमभेदं व्यवहारप्रसिद्धं परिगृह्य च 'इदं सर्वं यदयमात्मा' इतिश्रुत्यर्थं उपपादितः किल किंतु यस्य पृथिवी शरीरमित्यादिश्रुतिषु योगार्थेन शरीरशब्दः प्रयुक्तः, न तत्रार्थे शरीरशरीरिणोरभेदो लोकप्रसिद्धः, यत्र च द्वितीये योगरूढेऽर्थे शरीरशरीरिणोरभेदारोपो लोके प्रसिद्धो न तेनार्थेन यस्य पृथिवी शरीरमित्यादिश्रुतौ शरीरशब्दः प्रयुक्तः । अतो वञ्चनैव केवलेयम् । न च यस्य पृथिवी शरीरमित्यादिश्रुतौ योगरूढार्थक एव शरीरशब्दो गृह्यते । अत एव च यस्येति संबन्धिनिर्देश उपपद्यते । योगार्थस्य तु निरपेक्षस्य कस्येत्याकाङ्क्षाया अभावेन यस्येति निर्देशोऽनुपपन्नः स्यादिति वाच्यम् । तथा सति पृथिव्यादिविकारेणेश्वरस्य दुःखप्रसङ्गात् । अतो योगरूढार्थक एव शरीरशब्दोऽत्र सिंहो माणवक इतिवद्गौणार्थकः प्रयुक्त इत्यवश्यं वक्तव्यम् । किंच तत्रैव प्रकरणे यस्याऽऽत्मा शरीरम् ( बृ० ३ । ७ । २२ ) इत्येवं जीवात्मनः परमात्मशरीरत्वमुक्तमिति तैरेवाभिहितम् । तत्र च जीवात्मनि शरीरशब्दो न केवलया योगशक्त्या प्रवर्तते । जीवात्मनो विशरणस्वभावत्वाभावात् । तत एव च न योगरूढ्याऽपि । भोगायतनाभावाच्च । अतश्च तत्र शरीरशब्दः सिंहो माणवक इतिवद्गौण एवाऽऽश्रयणीयः। एवं यदि तत्रैकत्र गौण आश्रीयते तर्हि यस्य पृथिवी शरीरमित्यादौ सर्वत्रैव गौणार्थकग्रहणं युक्तम्। गौणार्थग्रहणे बीजभूतस्यान्तःस्थितेन नियम्यत्वस्य गुणस्य श्रुतौ तत्र सर्वत्रैव निर्देशदर्शनात् । अस्मिन्पक्षे यस्य पृथिवी शरीरमित्याद्यर्थं शरीरशब्दस्य केवलयोगकल्पनं न कर्तव्यं भवतीति लाघवमनन्यलभ्य एव शब्दार्थ इति न्यायानुग्रहश्च सिद्धो भवति । नन्वद्वैतिनां मते यस्याऽऽत्मा शरीरम् ( बृ० ३ । ७ । २२ भाष्यं ) इत्यत्र शरीरशब्दस्य कोऽर्थः । न तावन्मुख्योऽर्थः । जीवात्मनः परमात्मशरीरत्वस्याभावात् । न हि परमात्मनो भोगायतनं जीवः । नापि गौणार्थः । न हि परमात्मा जीवस्यान्तरो भूत्वा जीवं नियमयतीत्यद्वैतवादिभिः स्वी क्रियते ।

४

जीवो हि वस्तुगत्या परमात्मरूप एवेति हि ते वदन्ति । *य आत्मानमन्तरो यमयति* ( बृ० ३ । ७ । २२ ) इति तत्रत्यश्रुतिविरोधश्चेति चेन्मैवम् । तत्राऽऽत्मशब्दो न जीवात्मपरः किंतु जीवात्मनिष्ठविज्ञानपरः । समानप्रकरणे काण्वशाखायामात्मशब्दस्थाने ' यो विज्ञाने तिष्ठन् ( बृ० ३ । ७ । २२ काण्व ) इति विज्ञानशब्देन निर्देशदर्शनात् । तथा च जीवात्मगुणभूतं विज्ञानं परमात्मा नियमयतीत्यर्थः । केचित्त्वत्र *विज्ञानं च सृष्ट्यारम्भकाले ' तदैक्षत ' ( छा० ६ । २ । ३ )* इति निर्दिष्टं परमात्मकर्तृकमीक्षणम् । तच्च प्रथमत एव परमात्मनः सकाशात्तदीयगुणरूपेण ततः पृथग्भूतमिव प्रतीतमभूत् । गुणं चान्तररूपेण गुणी नियमयतीति प्रसिद्धमेवेत्याहुः ।

एतदुक्तं भवति । अन्तर्यामिब्राह्मणे माध्यंदिनशाखायामित्थं पठ्यते—*य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं यमात्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः* ( बृ० ३ । ७ । २२ माध्यं ) काण्वशाखायां त्वित्थं पठ्यते—'यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ' इति । एवं शाखाभेदेन पाठभेदेऽपि द्वयोः पाठयोरेक एवार्थ इति सर्वेषां संमतं न कस्यचिदपि तत्र विवादः । स चैकोऽर्थो द्विधा संभवति—य आत्मनि तिष्ठन्नित्यत्राऽऽत्मशब्दस्य विज्ञानमित्येवार्थ इत्येकः प्रकारः । यो विज्ञाने तिष्ठन्नित्यत्र विज्ञानशब्दस्य जीवात्मेत्येवार्थ इत्यपरः । अत्राद्वैतवादिनामाद्यः प्रकारः । विशिष्टाद्वैतवादिनां त्वन्त्यः । आद्य एव तु युक्तः । अन्तर्यामिब्राह्मणं ह्येतत् । अत्र च सर्ववस्तुष्वान्तरः परमात्मा सन् सर्वाणि वस्तूनि नियमयतीत्युच्यते । जीवात्मा च सूक्ष्मः । ततोऽपि परमात्मा सूक्ष्मतरः । परमात्मा तस्याऽऽन्तरः संस्तं जीवात्मानं नियमयतीति यद्यपि कल्पयितुं शक्यते तथाऽपि तत्र परमात्मकृतं जीवात्मनियमनं *गुणद्वारैव वक्तव्यम्* । *गुणानां च सर्वेषामुपजीव्य* आद्यो ज्ञानगुणः । ज्ञानस्य नियमनं च विषयसंनिकर्षसदसद्भावकृतमित्येवं संभवो वक्तव्यः । तथा च जीवात्मनो नियमनमपि तदीयविज्ञानस्यैव नियमनं संपन्नमिति विज्ञानं नियमयतीत्येवार्थस्तत्र वक्तुं युक्तः । किंच पृथिव्यप्त्वन्तरिक्षवायुद्युलोकादित्यदिक्चन्द्रतारकाकाशतमस्तेजसां नियमनमधिदैवतमुक्त्वाऽधिभूतमपि सर्वभूतनियमनमुक्त्वा ततोऽध्यात्ममिति प्रकृत्य प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतसामात्मसंबन्धिनां पदार्थानां नियमनमुक्तम् । तत्र चाऽऽत्मसं-

यन्विषु नियम्यत्वेनोक्तेषु पदार्थेषु विज्ञानमेव ग्रथितुं युक्तं न तु जीवात्मा। एवं च 'यो विज्ञाने तिष्ठन्०' इत्यादिकण्डिकायां विज्ञानशब्दस्थान आत्मशब्दपाठेऽपि तस्याऽऽत्मशब्दस्य विज्ञानमेवार्थो ग्राह्यो भवतीति नैव जीवात्मनः परमात्मशरीरत्वे श्रुतिः प्रमाणं भवति। अतः शरीरशरीरिणोः प्रसिद्धमभेदारोपं गृहीत्वा तत्त्वमसीत्यभेदोपपत्तिर्दूरापास्तैव भवति। किंच—

जीव ईशशरीरं चेज्जीवदुःखेन दुःखिता।
ईशस्य दुर्निवारा स्याद्विशिष्टाद्वैतिनो मते।

इति दोषः स्यादेव। अन्ये तु य आत्मनि तिष्ठन्नित्यादिश्रुतावात्मशब्दः स्वशब्दपर्यायः। तेनायमर्थः। यथा परमात्मा पृथिव्यादीनां सर्वेषामन्तर्यामी संस्तान् सर्वान्नियमयति तथाऽस्य परमात्मनः स्वस्मादन्यो न कोऽप्यन्तर्यामी नियन्ताऽस्तीति श्रुतेस्तात्पर्यमाहुः। किंच य आत्मनि तिष्ठन्नित्यादिश्रुतिं प्रमाणीकृत्य परमात्मा च जीवात्मनोऽप्यात्मा इति येऽभ्युपगच्छन्ति तेषां 'ज्ञानी त्वात्मैव मे मतम्' (भ. गी. ७। १८) इति भगवद्वाक्यविरोधः। अत्र हि ज्ञानी परमात्मनोऽप्यात्मा इत्युक्तम्। ज्ञानी च जीवविशेषः। जीवात्मा परमात्मा चेत्यनयोर्द्वयोश्च परस्परं प्रति परस्परस्याऽऽत्मत्वं तु नैव संभवति। अद्वैतिनां मते तु जीवात्मपरमात्मनोरैक्यमेवेति तदेवोभयत्रापि तात्पर्यमिति न विरोधः। किंच तत्त्वमसीतिवाक्यात्स्वरसतोऽभेदो विधेयतया श्रुतेर्विवक्षित इति गम्यते। स मुख्यतया विधेयोऽभेद एव विशिष्टाद्वैतवादिभिरारोपेण प्रतिपाद्यत इति चित्रमिदम्। एतेन 'तत्त्वंपदमुख्यार्थयोरेवाभेदबोधनसंभवे तत्त्वंपदलक्ष्यचिन्मात्राभेदप्रतिपादकत्वाश्रयणं निर्मूलम्' इति परास्तम्। श्रुतिवाक्ये हि मुख्यतयाऽभेदो विधीयते। तत्र गौणत्वकल्पनापेक्षयाऽभेदसंबन्धित्वेन निर्दिष्टयोस्तत्त्वंपदयोर्लक्ष्यार्थाश्रयणस्य लघीयस्त्वात्। किंचात्र तत्त्वंपदयोर्या लक्षणाऽऽश्रीयते सा नैव दोषाय भवति। लक्षणायां परार्थकल्पनारूपो यो दोषः सोऽत्र सुतरां नास्त्येव। यत इयं जहदजहल्लक्षणा तैराश्रीयते। यश्च स्वार्थहानिरूपो दोषः सोऽप्यत्रांशत एव। तथा च नात्र लक्षणागताः सर्वे दोषा इति लक्षणाशब्दमात्रान्न भेतव्यम्।

धर्मराजाध्वरीन्द्राश्चात्र लक्षणां विनैवार्थनिष्पत्तिमाहुः। इत्थं हि वेदान्तपरिभाषायां तैरुच्यते—'सोऽयं देवदत्तः, तत्त्वमसीत्यादौ विशिष्टवाचकप-

दानामेकदेशपरत्वेऽपि न लक्षणा । शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरभेदान्वयाविरोधात् । यथा ' घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः ' इति ।

अयमाशयः । घटादिपदानां जातिव्यक्त्योः पृथक्शक्तिः स्वी क्रियते चेदनित्यो घट इत्यत्र लक्षणां विना न काचिदनुपपत्तिः । व्यक्तिशक्त्योपस्थिते व्यक्तिरूपेऽर्थे जातिरनित्य इति च द्वयमपि विशेषणं संभवति । तत्र जातिराश्रयतया विषेषणमनित्य इति तु सामानाधिकरण्येनेत्यन्यत् । घटादिपदानामेकैव शक्तिर्विशिष्टेऽर्थं इति पक्षेऽपि घटत्वविशिष्टे घटेऽनित्य इति विशेषणं भवति । घटत्वस्य नित्यत्वेन घटत्वविशिष्टे घटरूपेऽर्थेऽनित्य इति विशेषणस्यासंभवेऽपि केवलघटे तादृशविशेषणस्य संभवात् । न हि यावच्छक्यं तावत्येवान्वय इति नियमः । शक्यतावच्छेदकसमानाधिकरणमेवान्वयितावच्छेदकमित्येव नियमो न तु शक्यतावच्छेदकमेवान्वयितावच्छदकामिति । तावतैवाप्रधाने विशिष्टार्थैकदेशे स्वतन्त्रविशेषणस्य निरस्तत्वेन दूषणानवकाशात् । अत एव घटत्वस्य नित्यत्वेऽपि न तदभिप्रायेण नित्यो घट इति प्रयोगः । नित्यत्वस्य शक्यतावच्छेदकवृत्तित्वेऽपि शक्यतावच्छेदकसामानाधिकरण्याभावात् । जातौ व्यक्तौ च पृथक्शक्तिरिति मतेऽपि न नित्यो घट इति प्रयोगः । घटत्वस्य स्वातन्त्र्येण घटपदशक्यत्वेऽपि तत्र शक्यतावच्छेदकस्यान्यस्याभावात् । घटत्वजातिर्हि स्वेनैव रूपेण शक्या भवति । तथा च घटत्वे शक्यतावच्छेदकस्यान्यस्य कस्याप्यभावेन तत्र विद्यमानस्यापि नित्यत्वस्य शक्यतावच्छेदकसामानाधिकरण्याभावात् ।

अथात्र प्रसङ्गादनयोः पक्षयोः कः श्रेयानित्युच्यते । घटादिपदानां विशिष्टे शक्तिरेकैवेति पक्षे शक्यार्थो यद्यपि गुरुभूतस्तथाऽपि तत्र पक्षे शक्त्यन्तरकल्पनापेक्षया लाघवमेव । यद्यपि शक्तिद्वयकल्पने पृथगुपस्थितयोर्धर्मधर्मिणोर्द्वयोर्मध्ये विशेषणविशेष्यभावे कामचारेण भावप्रधाननिर्देशस्यापि संगतिः सुवचा तथाऽपि शक्तिद्वयकल्पने यदि युगपद्द्वयोरर्थयोः प्रतीतिर्विवक्षिता चेत्तत्र तन्त्रादिस्वीकारः, एकस्यैवार्थस्य प्रतीतिर्विवक्षिता चेच्छक्तिनियामकस्य संयोगविप्रयोगाद्यन्यतमस्यानुसंधानमावश्यकमित्येवं गौरवान्तरमपरिहार्यं भवति । तस्माच्छक्तिद्वयकल्पनापेक्षया विशिष्टशक्तिपक्ष एव श्रेयान् । ननु विशिष्टश-

क्विपक्षे भावप्रधाननिर्देशस्थले का गतिरिति चेत्—अत्र केचिदित्थं समादधिरे। तादृशभावप्रधाननिर्देशस्थले निर्वाहाय व्यक्त्युपसर्जनकभावरूपे विशिष्टेऽर्थे शक्त्यन्तरं कल्पनीयमिति। नैतद्युक्तम्। शक्त्यन्तरकल्पनजगौरवपरिहाराय हि विशिष्टशक्तिकल्पनपक्षाभ्युत्थानम्। यदि विशिष्टशक्तिपक्षेऽपि शक्त्यन्तरकल्पना स्यात्तर्हि किं तत्पक्षाङ्गीकारेण। तस्मादित्थं समाधेयम्—भावप्रधाननिर्देशस्थले तादृशप्रयोगाणामल्पत्वात्ते लक्षणया निर्वाह्याः। यद्यपि लक्षणा जघन्या वृत्तिस्तथाऽपि तत्र शक्त्यन्तरकल्पनापेक्षया लाघवमेव। अत एव गङ्गायां घोष इत्यादौ गङ्गापदस्य तटे लक्षणावृत्तिः स्वीकृता न तु तटरूपेऽर्थे गङ्गापदस्य शक्त्यन्तरं प्रकल्पितम्। शक्त्यन्तरकल्पने शक्तिनियामकानुसंधाने च गौरवस्य स्पष्टत्वात्। अत्रायं निष्कर्षः। यत्रैकस्माच्छब्दात्प्रयोगभेदेनार्थद्वयप्रतीतिस्तत्र यदि तयोरर्थयोस्तथा संबन्धः स्याद्यथा तयोरेकस्मिञ्शब्दादुपस्थिते सति कारणे सद्य एव तेन संबन्धेनान्योऽर्थो बुद्धिमारोहति तर्हि तयोरर्थयोर्मध्ये यस्मिन्नर्थे भूयांसः प्रयोगास्तत्र तस्य शब्दस्य शक्तिर्यस्मिंश्चार्थेऽल्पीयांसः प्रयोगास्तत्रार्थे लक्षणेति। यत्र त्वेकस्माच्छब्दात्प्रयोगभेदेनार्थद्वयं प्रतीयते किंतु तत्र यदि तयोरर्थयोर्मिथस्तादृशः संबन्धविशेषो न स्यात्तर्हि तत्रागत्या द्वयोरप्यर्थयोः पृथक्शक्तिद्वयं स्वीकार्यं भवति। यथा सैन्धवादिशब्दाः। तथा यत्र निरुक्तसंबन्धविशेषेण संबद्धयोर्द्वयोरर्थयोरेकस्मादेव शब्दादेकस्मिन्नेव प्रयोगे युगपदुपस्थितिश्चेत्तत्रापि शक्तिद्वयं स्वीकार्यं भवति। यथा घटादिपदानां जातिव्यक्त्योः। ननु शक्तिद्वयस्वीकारापेक्षया लक्षणाया लघुभूतत्वेनैकत्र शक्तिरपरत्र लक्षणेति कुतो न स्वीक्रियते। स्वीकृतं च तथा केश्चिन्मीमांसकैरिति चेत्—सत्यम्। अत्र लक्षणाऽत्र न लक्षणेति निर्णयो हि प्रथमतोऽनुभवाधीनो न तु लाघवगौरवाधीनः। लक्षणा ह्यनुपपत्तिपूर्वकं प्रसरति। तस्माद्यत्र तथाऽनुभवस्तत्र लाघवेऽप्यनादरः। तदुक्तम्—

अनुभूतेर्विरोधे हि त्याज्यं भवति लाघवम्।
अनुभूतेरानुगुण्ये ग्राह्यं भवति गौरवम्॥ इति।

तथा च फलमुखस्येवानुभवमुखस्यापि गौरवस्यादूषकत्वमिति तात्पर्यम्। यत्र च नानुभवेन निर्णयो भवति तत्र लाघवगौरवचर्चाया अवसरः। अत

एवं 'तेजोऽभावेन सिद्धावन्धकारो न पदार्थान्तरम्' इति नैयायिकमतं लाघवानुगृहीतमपि न स्वीकृतमितरैर्वेदान्त्यादिभिः । अत्रान्धकार इत्येवं तस्य तेजोऽभावापार्थक्येन भावरूपेणानुभवस्य सर्वजनसिद्धत्वात् । एवमेव गुरुत्वाभावेन सिद्धावपि लघुत्वं द्रवत्वाभावेन सिद्धावपि काठिन्यं च गुणान्तरं स्वीकार्यं भवति । तथा च घटमानयेत्यादौ घटत्वादिजातिर्घटादिव्यक्तिश्चाव्यवधानेनैव बुद्धावारोहति न तु प्रथमतो घटत्वादिजातिबोधस्तदनन्तरं तस्याऽऽनयनाद्यन्वयानुपपत्तिप्रतिसंधानपूर्वकं घटादिव्यक्तिबोध इत्यनुभव इत्यतस्तत्र न लक्षणा स्वीकार्या भवति । तत्र घटादिपदानां जातौ व्यक्तौ च पृथक्शक्तिद्वयमेकैव वा विशिष्टे शक्तिरित्येवं संदेहे शक्तिद्वयाङ्गीकार एवोचितः । जातिविशिष्टव्यक्तौ शक्तिकल्पनायामपि भावप्रधाननिर्देशस्थले तथाबोधार्थं व्यक्तिविशिष्टजातौ पुनः शक्त्यन्तरकल्पनं गले पतितं स्यात् । अनुभवानुसारेण तत्र लक्षणाङ्गीकारस्याशक्यत्वात् । तथा च विशिष्टशक्तिपक्ष एव प्रत्युत गौरवाधिक्यमिति जातौ व्यक्तौ च पृथक्शक्तिद्वयकल्पनमेवोचितं भवति । तथैव च वेदान्तिभिः स्वीकृतम् । तथा च पृथक्शक्तिवादे विशिष्टशक्तिवादे चानित्यो घट इत्यत्र यथा लक्षणां विनैव वाक्यार्थबोधस्तथैव तत्त्वमसीत्यत्रापि स्यादिति तत्रापि लक्षणा माऽस्त्वेवेति ।

आचार्याणां त्वयमाशयः–तत्त्वमसीत्यादिवाक्याद्यज्ज्ञानं जायते तत्केवलं शाब्दं ज्ञानमिति न मन्तव्यम् । किंतु तज्ज्ञानं शाब्दमुच्यत एव प्रत्यक्षमपि च तदेवोच्यते । प्रत्यक्षज्ञानं शब्दादपि भवत्येव । 'दशमस्त्वमसीत्यादौ शब्दादेवापरोक्षधीर्भवति । तदुक्तं पञ्चदश्यां विद्यारण्याचार्यैः–

त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः ।
अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति ॥ (पं० द० ७।२७)

तत्रैतावान्विशेषः । दशमस्त्वमसीत्यत्र यच्छाब्दं ज्ञानं तदेव प्रत्यक्षमिति सत्यमेव । यथा च घटमानयेत्यादिवाक्येषु प्रथमतः पदज्ञानं, ततः पदार्थधीः, ततोऽन्वयबोधः । ततः शाब्दबोधः । तत्र च विषयविषयिभावो भेदप्रतीतिश्च विद्यत एव । तथैव दशमस्त्वमसीत्यत्रापि विद्यत एव । घटपटादिप्रत्यक्षवदेव च दशमस्त्वमसीत्यतोऽपि प्रत्यक्षम् । प्रत्यक्षेऽपि च पूर्वमिन्द्रियार्थसंनिकर्षो विद्यत एव । प्रत्यक्षे विषयविषयिभावो भेदप्रतीतिश्चेतरप्रत्यक्षवद्विद्यत एव ।

प्रकृते तत्त्वमसीत्यत्र तु यज्ज्ञानं जायते तदेव शाब्दं तदेव च प्रत्यक्षमिति सममेव। केवलं तच्छाब्दज्ञानं शब्दाज्जातमित्येव न तु तस्मिञ्शाब्दे ज्ञाने शब्दो वा अर्थो वा कश्चिदपि कमपि च प्रति प्रकारतया भासते । इतरस्मिञ्शाब्दे प्रत्यक्षे च ज्ञाने ज्ञानात्पूर्वभवः सर्वोऽपि यो व्यवहारः स महावाक्यजज्ञाने वर्तत एव । केवलं ज्ञानं तु न तत्सदृशम् । महावाक्यजज्ञाने हि लेशतोऽपि न द्वैतं प्रतीयते । अद्वैतमपि च तत्र प्रतीयत इति न मन्तव्यम्। विषयविषयिभावाभावात् । किंतु प्रकाश इत्येव । ज्ञाता ज्ञेयं ज्ञानमिति च त्रिपुट्यपि तत्र नास्ति। ननु निद्रायामपि त्रिपुटी न प्रतीयत इति चेत्--किं ततः। ततोऽत्र महद्वैषम्यम्। निद्रायां हि त्रिपुटी प्रतीतियोग्या विद्यमानैव सती प्रतिबन्धकाज्ञानवशान्न प्रतीयते । महावाक्यजज्ञाने तु त्रिपुटी स्वरूपत एव नास्ति । अतो न प्रतीयते । एतादृशनिर्विशेषबोधे तत्त्वमसीतिश्रुतेस्तात्पर्यम् । तच्च नेह नानाऽस्ति किंचन, यतो वाचो निवर्तन्ते, यन्मनसा न मनुते, इत्याद्यनेकश्रुत्येकवाक्यतया सिध्यतीति पूर्वमेव प्रतिपादितम् । स च निर्विशेषबोधो न शक्तिसाध्यः। शक्तिलभ्यस्यार्थस्य प्रकारतया विशेष्यतया संसर्गतया वा भानावश्यकत्वात्। तथा हि। अन्विताभिधानवादे तावच्छक्त्या योऽर्थ उपस्थितो भवति सोऽन्वयघटित एवेति तत्र पक्षे तथा भानं दुर्वारमेव । अभिहितान्वयवादेऽपि शक्यार्थोपस्थितौ सत्यां तत आकाङ्क्षायोग्यतासंनिधिवशादन्वयांशोऽपदार्थोऽपि समुल्लसत्येव । स चान्वयांशसमुल्लास इतरत्रेव तत्त्वमसीत्यत्रापि प्राप्नोत्येव। एवमन्वयांशसमुल्लासे च प्रकारतया विशेष्यतया संसर्गतया च भानमवर्जनीयमेव भवति। अतोऽत्र श्रीमदाचार्यपादैर्लक्षणा स्वीकृता । ननु लक्षणयोपस्थितस्याप्यर्थस्य शक्यस्येव प्रकारत्वाद्यन्यतमप्रकारेण भानमन्यत्र गङ्गायां घोष इत्यादिपूदाहरणेषु सर्वत्र दृश्यत एवेति चेत्--किं ततः। न हि केवलेन प्रायोदर्शनेन नियमः सिध्यत्यनुकूलतर्काभावे । सति चानुकूलतर्के प्रायोदर्शनाभावेऽपि नियमः सिध्यत्येव । तदुक्तम्--

अनुकूलस्तर्क एव नियमे बीजमुच्यते ।
अन्वयव्यतिरेकाभ्यां वृथैव प्रायदर्शनम् ॥ इति ।

प्रायोदर्शनस्योपयोगस्तु विषयव्याप्तौ भवतु नाम, न तु तेन नियमः सिध्यति । लक्षणास्थले शाब्दबोधस्तु वक्तृतात्पर्यानुरोधेनैव वक्तव्यः । तात्पर्यानुपपत्त्या हि लक्षणा प्रसरन्ती यथा तात्पर्यमेव लक्षयेन्न तु लेशतोऽपि तद्विरुद्धम् । तथा च तत्त्वमसीत्यतो निर्विशेषात्मावबोधसिद्धये लक्षणाऽऽवश्यकी । तदेव च

यथार्थज्ञानम् । जीवेशभेदस्य मिथ्यात्वेन सविशेषात्मबोधस्यायथार्थत्वात् । विशेष एव हि भेदं प्रयोजयति ।

तदयं यथार्थो निर्विशेषात्मबोधः श्रुत्यादीनि प्रमाणानि पुरस्कृत्य तत्त्वदर्शिनाऽऽचार्येण संपादितोऽपि यदि शिष्यः साधनचतुष्टयसंपन्नो न चेत्, संपन्नोऽपि वा ब्रह्मसूत्रदृढाभ्यासजन्यसंस्कारसहितमानसो न चेत्तर्हि नैव तस्य चित्तवृत्तौ प्रविशेत्प्रत्युतान्यत्राभिनिविष्टचेताश्चेन्निर्विशेषात्मावबोधस्य याथार्थ्येऽपि तस्य संदेहः स्यात् । तदुक्तम्–

प्रमाणभूतैः श्रुत्यादिवचनैः साधितस्तु यः ।
स वक्त्रा प्रोच्यमानोऽपि दुर्बोधो विषयो यदि ॥
बुद्धिमन्द्योऽपि च श्रोता स्वदोषं नैव पश्यति ।
वक्तर्यारोपयेद्दोषं श्रुत्यादिवचनेषु वा ॥ इति ।

अथात्र प्रसङ्गात्साधनचतुष्टयस्वरूपं तदुपयोगश्च प्रतिपाद्यते । साधनचतुष्टयं च–( १ ) नित्यानित्यवस्तुविवेकः । ( २ ) इहामुत्रफलभोगविरागः । ( ३ ) शमदमादिषट्कसंपत्तिः । ( ४ ) मुमुक्षुत्वं चेति । तदुक्तमभियुक्तैः–

नित्यानित्यत्वमीमांसा वैराग्यं चित्तनिग्रहः ।
मुमुक्षा चेति विज्ञेयं साधनानां चतुष्टयम् ॥ इति ।

एतच्च साधनचतुष्टयमात्मज्ञानमार्गाधिकारसंपत्तयेऽपेक्ष्यते । एतेषां मध्ये कस्याप्यभावे नैव श्रवणमनननिदिध्यासनरूपे ज्ञानमार्गे पदं प्रक्षेप्तुं शक्नुयात् । एषु च पूर्वपूर्वमुत्तरस्य कारणमिति यदा प्रथमस्यैवाभावस्तदाऽग्रिमसाधनत्रयस्याभाव एव । तथा द्वितीयस्याभावे तृतीयचतुर्थयोरभावस्तृतीयस्याभावे चतुर्थस्याभावश्च बोध्यः । यथा च पूर्वपूर्वमुत्तरोत्तरस्य कारणमिति पूर्वस्याभावे परस्याभावस्तथा पूर्वस्य सत्त्वे तत्र क्रमेण यथाकालेन परस्योत्पत्तिर्जायत एवेत्यप्यत्र नियमो बोध्यः । साधनत्वं चैतेषां परिपूर्णत्वेन । तथा हि । विवेकादीनि चत्वार्यपि चेमानि प्रत्येकं व्यापकसंकुचितभेदेन द्विविधानि । तत्राऽऽपेक्षिकनित्यत्वमूलको यो विवेकः स संकुचितः । स चात्र साधनतां नार्हति । तदुक्तम्–

श्वः स्थायी नार्थोऽसावित्येवं जायते मतिर्यत्र ।
उपयुज्यते स सद्यः किमिदं तत्त्वावबोधसामर्थ्यम् ॥ इति ।

यथा पक्वमाम्रादिफलमद्य नोपयुज्यते चेच्छ्वो विकृतं स्यादिति बुद्ध्या

सद्य एवोपयुज्यते । सांसारिकस्य जन्तोरयं विवेको न मोक्षमार्गोपयोगी । मोक्षमार्गोपयोगी विवेकस्त्वीदृशः—

विषयेन्द्रियसंबन्धे दोषैकदृशां विवेकधीर्या स्यात् ।
सोऽनित्यत्वविवेकस्तदितरदाभासमात्रमेव स्यात् ॥ इति ।

यो हि विषयेन्द्रियसंबन्धो देशतः कालतः प्रकारान्तरेण वा कथमपि धर्मशास्त्रेण निषिद्धो न भवति तत्रापि भाविविनाशाशङ्कादयः सूक्ष्माः सूक्ष्मतराश्च दोषा दोषैकदृशां जनानां मनस्यहमहमिकया प्रादुर्भवन्ति । ते च दोषास्तत्राऽऽसक्तानां ये तत्रत्या गुणाः प्रतीयन्ते तानप्यपसारयन्ति । एवं केवलदोषैराक्रान्तचेतसां जनानां मनोवृत्तौ निसर्गत एव वैराग्यस्योदयो भवति । स एव चाऽऽत्मावबोधायावकल्पते । तदुक्तम्—

स्थूलो दोषो यद्वत्सद्यो हेयत्वबुद्धिमातनुते ।
तद्वद्यदि सूक्ष्मः स्याद्यद्दृष्ट्या सोऽत्र वेदनाधिकृतः ॥ इति ।

वैराग्यमपि व्यापकसंकुचितभेदेन द्विविधम् । तत्र भोक्तुर्विषयेषु स्थूलदोषदृष्ट्या तत्र जायमानं वैराग्यं संकुचितम् । तदत्र साधनतां नार्हति । तदुक्तम्—

बुभुक्षितोऽपि पक्वान्नं यदि स्याद्विषशङ्कितम् ।
न जिघत्सति यत्तत्र वैराग्यं कारणं कथम् ॥ इति ।

संकुचितमेतद्वैराग्यं सांसारिकस्यापि संभवति । व्यापकमेव च वैराग्यं ज्ञानमार्गे उपयुज्यते । तच्च यथा—

नित्यानित्यविवेकाद्यद्वैराग्यं प्रजायते नृणाम् ।
तज्ज्ञेयं वैराग्यं तदितरदाभासमात्रमेव स्यात् ॥ इति ।

पूर्वोक्तप्रकारेण परिपूर्णावस्थां प्राप्ताद्विवेकाद्यद्वैराग्यं जायते तस्मादिन्द्रियनिग्रहो जायते । तादृश एव चेन्द्रियनिग्रहश्चिरस्थायी कार्यकारी च । इन्द्रियनिग्रहोऽपि व्यापकसंकुचितभेदेन द्विविधः । तत्रेन्द्रियाणां पूर्णसामर्थ्ये सत्यपि यत्तेन विषयाग्रहणं स इन्द्रियनिग्रहो व्यापकः । सामर्थ्याभावेन यद्विषयाग्रहणं स संकुचित इन्द्रियनिग्रहः । तदुक्तम्—

शुश्रूषते न बधिरस्तथा नान्धो दिदृक्षते ।
गीतिं दीपावलीं चैव किमसावक्षनिग्रहः ॥ इति ।
तथा—तृप्तः स्वाद्वपि पक्वान्नं परिवेषितमादरात् ।
यज्जिहासति किं तत्र हेतुरिन्द्रियनिग्रहः ॥ इति च ।

आत्मज्ञानोपयोगी व्यापक इन्द्रियनिग्रहस्तु पूर्णवैराग्यमूलकः । तदुक्तम्–

वैराग्यमूलको यो निग्रह इन्द्रियगणस्य जायेत ।
स शमो विज्ञेयस्तदितरदाभासमात्रमेव स्यात् ॥ इति ।

एवं पूर्णदशापन्न इन्द्रियनिग्रहे सति पूर्वं विद्यमानैव या मुमुक्षा साऽपि तदानीं पूर्णदशामापद्यते । तथा हि मुमुक्षाऽपि व्यापकसंकुचितभेदेन द्विविधा । इयमेव क्रमेण तीव्रा मन्दा चोच्यते । सा द्विविधाऽपि च पुनः प्रत्येकं द्विविधा । तीव्रा तीव्रतरा मन्दा मन्दतरा चेति । तत्र प्राणिमात्रस्य मनसि ज्ञाताऽज्ञाता वा मुमुक्षा बीजरूपेण विद्यत एव । भवरोगस्य रोगत्वेनाज्ञानात्केवलं तस्माद्बीजादङ्कुरोत्पत्तिर्न भवति । तदानीं सा रोगज्ञानादुद्भूताऽनुद्भूता वा मन्दतरेत्युच्यते । प्रथमसाधने नित्यानित्यविवेके पूर्णतामापन्ने तु सा मन्दा भवति । अङ्कुरमाधत्त इति यावत् । अप्ररूढाङ्कुरा मन्दतरा प्ररूढाङ्कुरा तु मन्दा बोध्या । अङ्कुरप्ररोहेऽपि मोक्षार्थं श्रवणमननादिप्रयत्नाकरणान्मुमुक्षाया मान्द्यत्वमेव । सांसारिकाणां स्त्रीपुरुषाणामिदानीं दृश्यमाना मुमुक्षा प्राय ईदृश्येव । तदुक्तम्–

कलौ लुब्धा नरा नार्यो व्यग्राः संसारकर्मणि ।
क्षणं क्रीडन्ति विश्रान्त्यै सायं वेदान्तचर्चया ॥ इति ।

अत्र च श्रवणादिकस्य क्रीडात्वेनाभिधानादयं प्रयत्नो नैव मोक्षार्थं इति सूचितम् । ततो द्वितीयसाधने वैराग्ये सति सा मुमुक्षा मान्द्यं परित्यज्य तीव्रतामापद्यते । तीव्रत्वाच्च श्रवणमननादिषु प्रवृत्तिर्जायते । किंतु सांसारिकव्यापारान्तराविरोधेन तृतीयसाधन इन्द्रियनिग्रहे परिपूर्णे सति तु सा मुमुक्षा तीव्रतरा भवति । यया गृहकर्मपरित्यागेनापि श्रवणादौ प्रवृत्तिः । यच्चापरिहार्यं गृहकर्म तत्करणसमयेऽप्यन्ततो मननं भवत्येव । एवं साधनचतुष्टयस्वरूपं तेषां मिथः संबन्धश्च प्रदर्शितः । अथानेन साधनचतुष्टयेन किं साधितं भवति तदुच्यते । नित्यानित्यविवेके क्रियमाण आत्मा केवलमेक एव नित्यस्तद्व्यतिरिक्तं सर्वमनित्यं देहोऽप्यात्मव्यतिरिक्तत्वादनित्य एव । नित्यस्य च न कदाऽपि विनाशो नापि विकारः । अनित्यस्य च विनाशो विकारश्चावर्जनीय एव । स्वभावत एवानित्यत्वादिति ज्ञायते । एतदेव च विवेकसाध्यमात्मनित्यत्वज्ञानं 'न त्वेवाहम्० ( २ । १२ ) इति श्लोकेन गीतायां भगवता प्रदर्शितम् । तथा विवेकपूर्वकवैराग्ये सत्यात्मनो विनाशित्वभ्रमेण तत्संरक्षणाय यः प्रयत्नः स न भवति । देहस्य चाऽऽत्मव्यतिरिक्तत्वज्ञानेन तत्र पूर्ववत्प्रीत्यभावे तत्संरक्षणार्थमपि न प्रयतते । कृतेऽपि प्रयत्ने विनाश-

स्यावर्जनीयत्वात्। न च यदा कदाऽपि विनाशो यद्यपि स्यात्तथाऽपि किंचित्कालपर्यन्तं देहसंरक्षणं स्यादिति बुद्धया तदर्थं प्रयत्नः स्यादिति वाच्यम्। तावताऽपि 'अमुकप्रयत्नेनामुककालपर्यन्तं देहसंरक्षणं स्यादेव' इति निश्चयाभावेन तदर्थं प्रयत्नस्यासंभवात्। संभावनामात्रेण प्रयत्नस्तु तावत्स्याद्यावद्देह आत्मत्वबुद्धिरविनष्टा। देह आत्मत्वबुद्धौ विनष्टायां तु देहं तृणकाष्ठादिवत्तुच्छं मन्यते। देहान्तरप्रापकं मरणमपि स तृणाय मन्यते। एतदेव च 'देहिनोऽस्मिन्' (गीता २।१३) इति श्लोके गीतायां भगवता प्रतिपादितम्। अस्यां चावस्थायामात्मनो नित्यत्वेन निर्विकारत्वान्न सुखं दुःखं वा। नापि देहस्य। तस्य जडत्वात्। अतः स तदानीं सुखार्थं दुःखनिवृत्त्यर्थं वा न प्रयतते। यदृच्छया जायमानं तु सुखं दुःखं वा तदाभास इति मत्वोपेक्षत एव। सुखाभासोऽप्ययं तत्स्थिरतार्थे कृतेऽपि प्रयत्ने नैव चिरस्थायी भवति। तथा दुःखाभासोऽप्ययं तद्विनाशायाकृतेऽपि प्रयत्ने स्वयमेव कियताचित्कालेन निवर्त्स्यत एव। सर्वथा यदृच्छाप्राप्तं सुखं दुःखं वा सहत एव तूष्णीमेवावतिष्ठते। एतदेव च 'मात्रास्पर्शा०' (गी. २।१४) इति श्लोके भगवता प्रतिपादितम्। अस्यां चावस्थितौ परिपूर्णे इन्द्रियनिग्रहे लौकिकाच्छास्त्रियाच्च काम्यकर्मणः सकाशान्निवृत्तं मनो निर्मलं भवति। कामनैव हि मनसो मलः। तथाऽपि मनसो मननस्वभावत्वाद्यं कंचित्तदानीं समुपस्थितं विषयमधिकृत्य मनोवृत्तिरुदिता स्यादेव। समुपस्थितं च तदानीं विषयद्वयम्। कामनाराहित्यमेकं सर्वसाधारणो बीजरूपेण मनस्येवावस्थितो मोक्षश्च। मनोवृत्तिगतो विषयश्च ग्राह्यश्चेत्काम्यत्वेन त्याज्यश्चेद्द्वेष्यत्वेन चिन्त्यते। अत्रोपस्थितं विषयद्वयं च काम्यत्वेनैव चिन्त्यते। कामनाराहित्यमपि तदानीं काम्यमेव। कामस्य मनोमलरूपेण तदानीमनुसंहिततया तद्विरुद्धस्य कामनाराहित्यस्य तदानीं ग्राह्यतयाऽनुसंधानात्। तथा मोक्षोऽपि तदानीं काम्य एव। भवस्य रोगरूपेण तदानीमनुसंहिततया तद्विरुद्धस्य मोक्षस्य तदानीं ग्राह्यतयाऽनुसंधानात्। ननु कामनैव हि मनसो मल इत्यनुपदमेवोक्तम्। सत्यमुक्तम्। न तु सर्वविधानां कामानां सर्वदैव मलत्वम्। किंत्वापेक्षिकं तत्। यथा—

अन्धकारोऽपि निद्रायां गुणो भवति कस्यचित्।

तथा लोके दारिद्र्यस्य दोषत्वेऽपि दारिद्र्यस्य दारिद्र्यं न दोषाय गण्यते। तदुक्तं नैषधे—

'अयं दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नलः ॥ इति ।

तदेवं कामनाराहित्यस्य मोक्षस्य च काम्यत्वेनानुसंधानं यस्याप्रतिहतं भवति तस्य व्यावहारिकाः शब्दादिविषयाणामिन्द्रियैः साकं संबन्धा लेशतोऽपि न पीडयन्ति स एव चाऽऽत्मविज्ञाने पूर्णोऽधिकारी संपद्यते । एतदेव च 'यं हि न व्यथयन्त्येते' ( गी० २ । १५ ) इति श्लोके गीतायां भगवता प्रतिपादितम् । तदेवं साधनचतुष्टयेनानेनाऽऽत्मविज्ञानोपदेशाधिकारः सिद्धो भवति । अत एव युद्धे पुरत उपस्थितान्भीष्मद्रोणादीन्दृष्ट्वा सद्यो विषण्णचेतसस्तत एव युद्धाद्विरतस्य न्यस्तशस्त्रस्यार्जुनस्य युद्धकर्मणि प्रवृत्त्यर्थमुपदेष्टुं प्रवृत्तेन 'नायमर्जुनस्य विषाद आत्मविज्ञानाधिकारोपदेशं विना समुच्छेत्स्यति' इत्यालोचयता भगवता नान्तरीयकतया तस्य तादृशाधिकारसाधनाय प्रथमत एव 'न त्वेवाहम्' ( गी० २ । १२ ) इत्यादिना श्लोकचतुष्टयेनैतत्साधनचतुष्टयानुगुणोऽर्थः क्रमेण गुम्फितः । तस्यैव चार्थस्य शीघ्रतरं सुखावबोधायानुभवारूढत्वाय चाऽऽवश्यकं समुपबृंहणं यावच्छक्यं संक्षेपेण यत्कृतं तदियं भगवदुक्तिस्तत्र तादृशप्रसङ्गवशाज्जायमानाऽपि यथाऽर्जुनस्य युद्धकर्माविरोधेनाऽऽत्मविज्ञानोपदेशाधिकारं संपादितवती तथाऽन्यानपि सांसारिकजनान्पूर्वसंस्कारानुरोधेनाऽऽत्मविज्ञानमार्गाभिमुखीभूतान्सांसारिककर्माविरोधेनाऽऽत्मविज्ञानोपदेशाधिकारं संपादयेदेव । अत एवेयं भगवदुक्तिर्गीतापदवाच्या प्रस्थानत्रयात्मकात्मविज्ञानमार्गीयं प्रथमं प्रस्थानमेतादिति प्रसिद्धिमुपगताऽऽसीत् ।

एवं गीतया प्रथमेन प्रस्थानेन साधकस्याऽऽत्मविज्ञानमार्गोपदेशाधिकारे साधितेऽपि तस्यान्यः कश्चिदधिकारविशेषोऽपेक्ष्यते । उपदेष्टुराचार्यादेः प्रवचनशैली न यावच्छ्रोतृभिरवगता भवति तावत्तत्प्रयुक्ताया वाचस्तात्पर्यार्थं निश्चेतुं न ते शक्नुयुः । तदुक्तं महाभाष्ये पतञ्जलिना–'एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति' ( म० भा० हयवरट् सू० ) इति । अत्राऽऽचार्यमहेश्वरस्य शैलीं दृष्ट्वा तदनुसारेण अ इ उ ण् इत्यत्र णकारस्य न प्राधान्येनोपदेश इति निश्चित्य तस्य प्रत्याहारे ग्रहणाभावः साधितः । तथा चात्र साधनचतुष्टयसंपन्नस्याप्यधिकारिण उपदेष्टुः प्रवचनशैलीज्ञानमावश्यकम् । अत्र चाऽऽत्मविज्ञानविषये मुख्यत उपदेष्टृत्वं श्रुतेरेव । तद्द्वारेणाऽऽचार्याणामुपदेष्टृत्वम् । श्रुतिरपि यत्र यतो वाचो निवर्तन्तेऽप्राप्य मनसा

सह ( तै० २ । ४ । १ ) इत्येवं स्वयमेव स्वस्या निवृत्तिमाह तत्र का वार्तेतरेषामाचार्याणाम् । किंतु 'मनसा सह वाचो निवर्तन्ते' एतदपि श्रुत्यैव ज्ञायते । तस्मात्साधनचतुष्टयसंपन्नस्य निष्कामकर्मणा शुद्धचित्तस्यापि श्रुतितात्पर्यनिश्चयाय श्रुतेः कीदृशी प्रवचनशैली तद्विशेषावगम आवश्यकः । तदर्थमेव च श्रीमद्वेदव्यासैर्ब्रह्मसूत्रं प्रणीतम् । येन च श्रुतेः प्रवृत्तिः कीदृशी, क्व वाच्यवृत्त्या क्व लक्षणावृत्त्या क्व विधिमुखेन क्व निषेधमुखेन कुतो वा तथेत्यादि सर्वमवगम्य 'अत्रेदमेव श्रुतितात्पर्यम्' इति निश्चयः कर्तुं शक्यते। अत एवेदं ब्रह्मसूत्रं द्वितीयं प्रस्थानमिति गीयते । अथोपदेशविशेषादिषु यत्र यादृशोऽधिकारी प्रतिपादितः स तादृशः संपन्न इति कथं ज्ञातव्यमिति चेत्— उच्यते । संध्याग्निहोत्रादावुपनीतोऽधिकारी। किंतु तत्रापि संध्याग्निहोत्रानुगुणवर्तने योऽनलसः स एव मुख्योऽधिकारी ज्ञातव्यः । स च संध्याग्निहोत्रादिकं कर्म बन्धनत्वेन न मन्यते । उपदिष्टार्थानुगुणं यद्वर्तनं तदनिष्टमित्यायासकरमिति न यस्य कदाऽपि मतिर्भवति । किंत्विदमिष्टमावश्यकं चेति यस्य मतिः स मुख्योऽधिकारीति यावत् । तादृशी मतिश्च कस्यचित्पूर्वमेव भवेत् । यस्य च तादृशी मतिः पूर्वं न स्यात्तर्हि साऽधिकारापादकेन कर्मणैव संपादनीया भवति । नत्वधिकारोत्तरमुपदेशादिना । तदुक्तम्—

यथा यस्य प्रवृत्तिः स्यादविचाल्यैव तां यदि ।
उपदेशः कृतः स्याच्चेत्साफल्यं याति सत्वरम् ॥ इति ।

यस्य चोपनीतस्यापि न तादृशी मतिः स यथावदुपनीत एव नाभूदिति मन्तव्यम् । एवमेव सर्वत्र बोध्यम् । प्रकृते च प्रस्थानद्वयेन योऽधिकारी भवति तस्य श्रुतेः स्वारसिकः सरलश्च योऽर्थः स एव श्रवणमात्रेण प्रथमत एव बुद्धिमारोहति । तादृश एव चाऽऽत्मज्ञानोपदेशाधिकारी संपन्न इत्यभिज्ञातव्यम् ।

ब्रह्मसूत्रेण च नाऽऽपाततोऽवलोकितेन सकृदवलोकितेन वा श्रुतितात्पर्याकलनं भवति । अपि तु शान्तवृत्त्या पुनः पुनरभ्यस्तेन । तदुक्तम्—

तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ इति ।

इत्युक्तरीत्याऽभ्यासे कृते सत्येव क्रमशस्तत्रानेकविधसंशयनिवृत्तिर्भवति । तादृगभ्यासश्च शान्तवृत्त्यैव भवतीति तदर्थं प्रथमप्रस्थानेन निष्कामकर्मयोगेण

चित्तशुद्धिः साधिता। चित्तशुद्धौ हि यत्र क्वापि विषये मनसोऽभिनिवेशो न जायते। चित्तशुद्धेरभावे हि यस्य पूर्वसंस्कारवशेन यत्र क्वाप्यसदर्थेऽभिनिवेशश्चेत्तत्प्रातिकूल्येऽर्थे निसर्गत एव मनसो गतिः कुण्ठिता भवति। तदेवं सुतीक्ष्णमतेर्विचारशीलस्यापि मनोऽभिनिविष्टं चेत्-

'अभिनिवेशवशीकृतचेतसां बहुविदामपि संभवति भ्रमः'

इति न्यायेन श्रुतेर्मुख्यं तात्पर्यं नावबुध्येत प्रत्युत विपरीतार्थविषयक एव निश्चयः स्यात्। तदुक्तम्-

विनाऽधिकारसंपत्तिमुपदेशो भवेद्यदि।
न तस्मात्फलनिष्पत्तिः प्रत्युतानर्थ उद्भवेत्॥ इति।

यथा शूद्राणां कृतेऽपि गायत्र्युपदेशे नैव तेन ब्रह्मतेजः प्राप्यते प्रत्युतोपदेष्टोपदेश्यश्चेति द्वयोरपि तयोरधोगतिर्भवति। तदेवं क्रमेण प्रस्थानद्वयेन द्विविधेऽप्यधिकारे साधकेन संपादिते ततः साधकस्तृतीयप्रस्थानाभिमुखश्चेन्नूनं तस्य सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा० ६।२।१) तत्त्वमसि (छा० ६।८।७) इत्यादिश्रुतीनां सारल्येनार्थोपस्थितौ सद्य एवाद्वैतात्मावबोधः स्यादेव। चित्तशुद्ध्यभावे त्वनादिकालमारभ्य चिदचिद्भेदस्य जीवेशभेदस्य चानुभवेन तदनुगुणताद्दृश्यसंस्कारस्य प्राबल्येन तदानुगुण्येनैवोक्तश्रुत्यर्थयोजने स्वरसतः प्रतीयमानस्यार्थस्य त्यागे च मानसिकी प्रवृत्तिर्दुर्वारा स्यादित्यात्मतत्त्वज्ञानं न स्यात्।

नन्वनादिकालमारभ्य प्रवृत्तो भेदः सत्य एव कुतो न स्यादिति चेन्न। एकमेवाद्वितीयम् (छा० ६।२।१) नेह नानाऽस्ति किंचन (बृ० ४।४।१९) इत्यादिश्रुतिभिः स्पष्टमेव भेदनिषेधप्रतिपादनात्। निषेधश्चात्र मुख्यतया वाक्यतात्पर्यविषयीभूतो दृश्यते। ननु सदेव सोम्य० एकमेवाद्वितीयम् (छा० ६।२।१) इत्यत्र नियन्तुरनेकत्वं निषिध्यते न तु तत्र सामान्यतो भेदो निषिध्यत इति चेन्न। तत्र नियन्तृपदाश्रवणेन स्वरसतस्तादृशार्थप्रतीतेः। अध्याहारस्य च वक्तृतात्पर्यानुरोधेनैव वक्तव्यत्वात्। तदुक्तम्-

योऽर्थोऽनुक्तोऽप्युद्भवति श्रोतृचित्ते निसर्गतः।
स एवाध्याहृतो ज्ञेयो वाक्यविद्भिः प्रकल्पितः॥
वक्तृतात्पर्यानुरोधस्तत्र तन्त्रं न चेद्यदि।
निषेधकत्वं दुर्वारं नञर्थेऽध्याहृते विधेः॥ इति।

किंच यथेयं श्रुतिर्भेदनिषेधे प्रमाणं भवति न तथाऽऽध्याहारेऽपि सा श्रुतिर्भेदे प्रमाणं भवितुमर्हति । भेदस्य तत्राविधेयत्वात् । द्रष्टव्यः श्रोतव्यः ( बृ० २ । ४ । ५ ) इति श्रुतावपि भेदो नैव विधीयते । नाप्यनूद्यते । किंतु विधीयमानस्य दर्शनश्रवणादेरन्यथानुपपत्त्या केवलं कल्पनीयः । सा चानुपपत्तिरपि नास्ति । व्यवहारे प्रतीयमानं भेदं गृहीत्वा तदुपपत्तेरिति प्रागुक्तमेव । सा च प्रतीतिः सत्याऽसत्या वेत्यन्यदेतत् । न चासत्यो भेदश्चेत्तेन कथमुपपत्तिः स्यादिति वाच्यम् । दर्शनश्रवणादेर्हानोपपत्तिः कार्या । असत्यभेदवादिनो हि दर्शनश्रवणादिरप्यसत्यत्वमेव मन्यन्ते । ‘ असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ’ ( वाक्यपदीयः ) इति हि तेषां न्यायः । तथा च यथा स्वप्नस्थेनासत्येन दण्डेन जायमान आघातोऽपि स्वप्नस्थोऽसत्य एव भवति केवलं तत्र तद्विषयकं ज्ञानं सत्यमेव भवति तथा प्रकृतेऽसत्येन भेदेन जायमानोपासनाऽप्यसत्यैवाऽऽस्तां नाम । केवलं तत्राऽऽत्मविज्ञानं सत्यमेव भवति । अतो नेयं श्रुतिः सत्ये भेदे प्रमाणम् ।

अथ प्रसङ्गाच्छाब्दप्रमाणविचारः । शाब्दप्रमाणेन सिध्यन्नर्थः प्रकारत्रयेण सिध्यति । विधेयत्वेनानुवाद्यत्वेनानुपपत्त्या कल्पनीयत्वेन चेति । यथा ‘ पीनो देवदत्तो दिवा न भुङ्क्ते ’ इति वचनाद्देवदत्तस्य दिवाभोजनाभावो विधेयत्वेन सिद्धो भवति । देवदत्तस्य पीनत्वं तु तत्रानूद्यमानत्वेन सिद्धं भवति । देवदत्तस्य रात्रिभोजनं च पीनत्वान्यथानुपपत्त्या सिद्धं भवति । तत्राऽऽद्ये प्रकारे साक्षादेव शाब्दप्रमाणेनार्थः सिध्यति । द्वितीये तृतीये च प्रकारे परम्परया सिध्यति । यथा देवदत्तः पीनः पीनत्वेन तस्यानूद्यमानत्वादित्यनुमानेन देवदत्तस्य पीनत्वं साक्षाज्ज्ञायते । तद्द्वारा च तत्र शाब्दं प्रमाणं प्रवर्तते । अत्रेदमवधेयम् । योऽर्थः प्रमाणान्तरद्वारा शाब्दप्रमाणेन सिद्धो भवति स मुख्य एवेति न नियमः किंतु तत्सदृशोऽपि । एतदभिप्रायेणैवोक्तमभियुक्तैः—

यदपत्यमपत्यस्य तदपत्यसमं भवेत् ।
पौत्रप्रभृत्यपत्यं यदेवं वदति पाणिनिः ॥ इति ।

अयं भावः—‘ अपत्यं पौत्रप्रभृति गोत्रम् ’ ( पा० सू० ४ । १ । १६२ ) इति हि पाणिनिवचनम् । तत्र शाब्दप्रमाणेन पौत्रप्रभृतेर्गोत्रत्वं साक्षादेव सिद्धं भवति । पौत्रप्रभृतेरपत्यत्वं त्वनुमानद्वारेति । तथा तस्यापत्यत्वं सिध्यदपत्यसादृश्ये पर्यवस्यतीति । अपत्यसदृशेऽप्यपत्यसादृश्यमात्रेणापत्यशब्दे-

नानुवादसंभवादिति । एवं पीनो देवदत्तो दिवा न भुङ्क्त इत्युक्ते तत्र शाब्द-प्रमाणेनार्थापत्तिप्रमाणान्तरद्वारा साध्यं रात्रिभोजनमपि रात्रिभोजनसदृशे पर्य-वस्यति । तेन तत्र तादृगवल्लीविशेषसेवनमपि सिध्यति । तथा प्रकृते द्रष्टव्यः श्रोतव्य इति शाब्दप्रमाणेन दर्शनाद्यनुपपत्त्याऽर्थापत्तिप्रमाणान्तरद्वारा सिध्यन् भेदः कथं मुख्य एव स्यादिति यत्किंचिदेतत् । किंच 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति' (तै० २।७।१) इति तैत्तिरीयश्रुतौ भेददर्शिनो भयप्राप्तिरभिहिता। तेन स नैव मोक्षाधिकारीति सूच्यते। यतस्तत्र पूर्वस्मिन् वाक्येऽभयप्राप्तिरूपेण मोक्षो निर्दिष्टः । तद्विरुद्धा चात्र भयप्राप्तिरुक्ता । भेदस्य सत्यत्वे तु तद्दर्शनमवर्जनीयमेव स्यात् ।

यत्तु तत्र श्रुतावन्तरशब्देन भेदवाचिना भेदप्रयोजकीभूतो निकृष्टत्वधर्मो लक्ष्यते । स च धर्म ईश्वरात्सकाशाद्भेदं जीवेषु प्रयोजयति । स च धर्मो जीवगत इत्युदरशब्देनोच्यते । उत् उत्कृष्टः अः वासुदेवः येभ्य इत्येव-मुच्छब्दस्य अशब्देन पञ्चमीबहुव्रीहौ उदशब्दस्य जीवार्थकत्वम् । उदान् रातीत्युदरः, जीवगत इति यावत् । तथा च जीवगतं निकृष्टत्वमेतस्मिन्नीश्वरे ये मन्यन्ते तेषां भयमित्यर्थ इति भेदवादिभिरुक्तं तन्न सम्यक् । एतादृश-कष्टकल्पनयोदरशब्दस्य जीवनिष्ठ इत्यर्थं प्रकल्प्य तदभिप्रायेण श्रुतावुदरशब्दो निर्दिष्ट इति मनोरथमात्रम् । श्रुतावीदृशार्थकल्पना भवन्तमन्तरेण कस्यापि मनो न स्पृशति । कष्टकल्पनया हि किं न स्यात् । यस्य कस्यापि वाक्यस्य यः कोऽप्यर्थः स्यात् । कस्तत्र नियामकः स्यात् । पूर्ववाक्ये अभयं गतो भवतीत्यत्राभयशब्दे वासुदेववाचकस्य अशब्दस्य भयशब्देन पञ्चमी-तत्पुरुषे वासुदेवाद्भयं प्राप्नोतीत्यर्थः स्यात् । अथ तस्य भयं भवतीत्यत्र संसारार्थकाद्भवशब्दादाचारक्किपि भव इवाऽऽचरतीत्यर्थकल्पनया संसारवत्तस्य भयं विपरिवर्तत इत्यर्थः स्यात् । तस्मादुत् अरम् इति पदद्वयं परिकल्प्य ईषद्भेदं यो मन्यते तस्य भयमित्यर्थ इत्येव कल्पना ज्यायसी । 'किंच माया-मात्रमिदं द्वैतमद्वैतं परमार्थतः' (गौ० का० १।१७) इति माण्डूक्यका-रिकायां द्वैतस्य मायामात्रत्वमद्वैतस्य च पारमार्थिकत्वं स्पष्टमेव विधेयत्वेन प्रतीयत इति भेदस्यासत्यत्वमेव सुतरां श्रुतेरभिमतमिति गम्यते । मायामात्र-मिति कारिकाया अयमर्थः–इदं द्वैतम्—अनादिकालमारभ्यानुभूयमानम् 'अहं ममेति' इदं द्रव्यमयं गुण इति, अयं घटोऽयं पट इति, अयं शब्दोऽयं

स्पर्श इत्यादिकं सर्वमेव मायामात्रम्। केवलं प्रतीयत इत्येव। ननु वस्तुतस्तस्य सत्यत्वम्। ननु सर्वविधव्यवहारमूलभूतस्य द्वैतस्यैवासत्यत्वे किं शून्यमेव श्रुतेरभिप्रेतमिति चेत्तत्राऽऽह–अद्वैतं परमार्थत इति। नैव शून्यवादः श्रुतेरभिप्रेतः किंत्वात्मैक्यवाद एव। नन्वयमात्मैक इति न कस्यापि संविज्ञानम्। तदानीं द्वैतस्यैवाभावात्। तथा च संविज्ञानाभावे कथमात्मैक्यवादः सिध्येदिति चेन्नैवम्। वस्तुसत्तायाः संविज्ञानाधीनत्वाभावात्। शुक्तिरजतादिप्रातिभासिकपदार्थसत्तायाः संविज्ञानाधीनत्वेऽपि पारमार्थिकसत्तायाः संविज्ञानाधीनत्वाभावात्। अत एवाद्वैतमिति परमार्थत इति चोक्तम्। परमार्थत इति पारमार्थिकी सत्ता द्योत्यते। अद्वैतपदेन च द्वैतनिषेधमुखेनाऽऽत्मैक्यं द्योत्यते। निषेधमुखेन प्रतिपादनस्य तत्पूर्वकालिकसंविज्ञानसापेक्षत्वाभावात्। अत एव भूयसीषु श्रुतिषु निषेधमुखेनाऽऽत्मा प्रतिपादितः। तथा हि--अपहतपाप्मा विजरः (छा० ८। ७। १) नेह नानाऽस्ति किंचन (बृ० ४। ४। १९) अशब्दमस्पर्शम् (का० ३। १५) यतो वाचो निवर्तन्ते (तै० २। ४। १) यन्मनसा न मनुते (के० ५) न चक्षुषा पश्यति (के० ३। ५) इत्याद्याः। ननु सत्यं ज्ञानम्० (तै० २। १। १) इत्येवं विधिमुखेनाप्यात्मप्रतिपादने श्रुतेः प्रवृत्तिर्दृश्यते। सत्यं दृश्यते। किंतु जिज्ञासोरनुग्रहाय कल्पनामात्रसिद्ध्यर्थं तथा वर्णनम्। विधिमुखेन श्रुतोऽर्थो हि कल्पनाया अनुकूलो भवति श्रोतॄणां मनसि। तथा च सत्यमित्यस्यासत्यं नेत्यर्थे तात्पर्यम्। एवमेव विधिमुखेन प्रवृत्तानामितरेषां पदानां तात्पर्यं बोध्यम्। अत एव 'यन्मनसा न मनुते (के० ५) इति श्रुतेर्न विरोधः। अन्यथा सत्यत्वज्ञानत्वादिना मननसंभवेन सा श्रुतिर्विरुद्धा स्यात्। भेदस्य सत्यत्वे त्वीश्वर ईदृशो जीवश्चेदृश इत्येवं भेदप्रयोजकधर्माणामावश्यकत्वेन तेषां च धर्माणां वाङ्मनोविषयत्वस्यावर्जनीयतया यतो वाचो० (तै० २। ४। १) इत्यादिश्रुतिविरोधः स्पष्ट एव। यत्तु द्वैतवादिभिर्यतो वाच इति श्रुतौ साकल्येनेत्यध्याहृत्य साकल्येनाप्राप्य यतो वाचो मनसा सह निवर्तन्त इत्यर्थः। तथा यद्वाचाऽनभ्युदितमित्यत्रापि साकल्येनेत्यध्याहारं कृत्वाऽर्थः प्रतिपादितः। स चास्वरसग्रस्त इति स्पष्टमेव। अध्याहारे प्रमाणाभावात्। शब्दानामसंकोचेन स्वार्थप्रतिपादने प्रवृत्तेः स्वभावसिद्धत्वाच्च।

यत्तु द्वैतवादिभिरुक्तम्–इण्गतावित्यस्य धातोर्गत्यर्थानां बुद्ध्यर्थकत्वेन ज्ञानार्थकत्वं स्वीकृत्य तस्माद्भावे क्ते ज्ञानार्थक इतशब्दः। द्वितीयप्रकारार्थकेन द्विशब्देन इतशब्दस्य समासे द्वितीयप्रकारेण जायमानं ज्ञानमित्यर्थो द्वीतशब्दस्य सिद्धः। तस्मात्स्वार्थेऽण्प्रत्यये द्वैतशब्दस्य स एवार्थः। कर्मणिक्तप्रत्यये तु द्वीतशब्दाद्भावार्थेऽण्प्रत्यये द्वैतशब्दस्य स एवार्थः। वस्तुनि विद्यमानो धर्म एकः प्रकारः। अविद्यमानश्च द्वितीयः। यथा शुक्तौ शुक्तित्वं प्रथमः प्रकारः। रजतत्वं च द्वितीयः। तथा च शुक्तौ रजतादिज्ञानं द्वैतशब्देनोच्यते। तन्मायामात्रम्। मायाशब्देनेश्वरेच्छा गृह्यते। तथा चेश्वरेच्छामात्रकल्पितं तादृशं ज्ञानम्। अद्वैतं प्रथमप्रकारेण जायमानं ज्ञानं तु पारमार्थिकमिति। अत्रोच्यते। द्विशब्दस्य द्वितीयः प्रकार इत्यर्थे स च तत्राविद्यमान एव धर्मो ग्राह्य इत्यर्थे च प्रमाणाभावात्। किमत्र द्वैतशब्दे योगो वा योगरूढिर्वा। योगश्चेदतिप्रसङ्गः। घटे स्पर्श एको धर्मः, रूपं च द्वितीयः। तस्य च तत्र विद्यमानस्यापि द्वितीयशब्देन ग्रहणे शुक्लो घट इति ज्ञानस्यापि तन्मतेऽपारमार्थिकत्वापत्तिः। रूढिश्चेत्त सा वादिमतमात्रसिद्धा प्रतिवादिमतमात्रसिद्धा वा ग्राह्या भवति, किंतु–

मध्यस्थसंमता या स्यात्सैव रूढिर्निगद्यते

इति न्यायेन मध्यस्थसंमताऽपेक्ष्यते। तथा त्वत्र न दृश्यते। किंच द्वैताद्वैतमध्येऽद्वैतस्य पारमार्थिकत्वे प्रोक्ते तद्विरुद्धस्य द्वैतस्य पारमार्थिकत्वविरुद्धमपारमार्थिकत्वं वक्तव्यमिति मायामात्रशब्दस्यापारमार्थिकार्थत्वमेवोचितम्। किंच द्वैताद्वैतयोरुभयोरपीश्वरेच्छासाधारणत्वाद्द्वैतस्यैवेश्वरेच्छाकल्पितत्वोक्तिर्न संगच्छते। अथाविद्यमानेन धर्मेण ज्ञानमीश्वरेच्छामात्रकल्पितं मनोराज्यमिव भवति न तथा विद्यमानेन धर्मेण ज्ञानमद्वैतपदवाच्यमिति द्वैताद्वैतयोर्विशेष इति चेत्तावताऽपि मायामात्रमिदं द्वैतमित्येतावतैव सिद्धावद्वैतं परमार्थत इत्यस्य वैयर्थ्यं स्यादेव। विरुद्धयोरर्थयोर्मध्य एकत्र कस्मिंश्चिद्धर्मे प्रतिपादितेऽपरत्र तद्विरुद्धधर्मस्यायत्नसिद्धत्वात्। किंच विद्यमानेन धर्मेण ज्ञानमित्यर्थस्याद्वैतशब्देन निषेधमुखेन प्रतिपादने को हेतुः। न हि सोऽर्थो विधिमुखेन प्रतिपादयितुं न शक्यते।

किंच यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः ( बृ० १।३।७ ) इति श्रुतेरपि भेदस्यासत्यत्वं सिध्यति।

यस्मिन्परमात्मनि सर्वात्मनि ज्ञानिना स्वात्मतयाऽवगते सति । अयं चात्रार्थः प्रकरणलभ्यो यस्मिन्नित्यनेन परामृष्टः । अन्यत्र तु ' सर्वात्मानम् ' ( श्वे० ३ । २१ ) इति स्पष्टमेवोक्तम् । विजानतस्तादृशज्ञानतः साक्षात्कृतवतो ज्ञानिनः सर्वाणि भूतान्यात्मरूपाण्येवाभूवन् । आत्मशब्देन ज्ञानिनः परामर्शः । ज्ञानी हि सर्वाणि भूतानि स्वात्माव्यतिरिक्तान्येव साक्षात्करोति । एवं स्वात्मैकत्वमनुपश्यतो मोहशोकौ कथं स्याताम् । मोहः शोकश्च स्वात्मव्यतिरिक्तप्रतियोगिकः । यत्र क्वापि व्यतिरिक्तबुद्धिर्यस्य नास्ति तस्य शोको मोहश्च कथं स्यादित्यर्थः । अत्राऽऽत्मैवाभूदित्येवशब्देनाऽऽत्मीभवनप्रतिपादन एव मुख्यं तात्पर्यं पूर्वार्धस्यावगम्यते । अनात्मत्वबुद्ध्यभावसहकृतात्मत्वबुद्धिरात्मैवाभूदित्यस्यार्थः । तादृशात्मत्वबुद्धिमेवोत्तरार्धे एकत्वमनुपश्यत इत्येवमनूद्य तच्छोकमोहाभावे हेतुगर्भं विशेषणं विजानत इत्यस्योक्तम् । अतः पूर्वोत्तरार्धयोरत्र हेतुहेतुमद्भावसंगतिः । अस्माच्छ्रुतिवाक्याद्भेदस्यासत्यत्वं स्पष्टमेवावगम्यते । यत्तु द्वैतवादिभिरुक्तम्—अत्र वाक्यत्रयम् ' यस्मिन्सर्वाणि भूतानि ' इत्येकम् । ' आत्मैवाभूत् ' इति द्वितीयम् । ' विजानतः ' इत्यादि तृतीयम् । द्वितीये वाक्ये य इत्यध्याहारः । तृतीये चैवमित्यध्याहारः । तदयमर्थः—यस्मिन्परमात्मनि सर्वाणि भूतानि सन्ति । यश्च परमात्मा सर्वेषामाधारतयाऽऽत्मैवाभूत् । एवं विजानतः सर्वेषामेक एवाऽऽधार इत्येकत्वमनुपश्यतश्च शोकमोहौ न स्तः । शोको मोहश्च प्रतियोग्यनुयोगिनोर्भिन्नाधारत्वे यथा संभवति न तथा तयोरेकाधारत्वे । वस्तुस्थितेराधारतन्त्रत्वादित्याशयः ।

अत्रोच्यते । अनेन श्रुत्यर्थेन द्वैतवादिभिः स्वमतेनास्याः श्रुतेरुपपत्तिः कथंचित्कृता स्यात् । नत्वयमस्याः श्रुतेः स्वारसिकोऽर्थ इति बालैरपि सुज्ञेयम् । अत्र वाक्यत्रयम्, तत्राध्याहारः, आत्मत्वं चाऽऽधारतया, तथैकत्वमाधारस्येत्यत्र प्रमाणाभावात् । सर्वमेतत्स्वकपोलकल्पितमिव दृश्यते । किंच शोकमोहयोरभावः सर्वथा न संभवति । एकाधारयोरपि द्रव्ययोर्मध्य एकप्रतियोगिकोऽन्यानुयोगिकः शोकस्तथा मोहश्च संभवत्येव । अत्रेदं बोध्यम्—आधारस्त्रिविधः । वस्तुनः स्वरूपधारकत्वेन, स्वरूपपोषकत्वेन, अस्तित्वप्रयोजकत्वेन चेति । आद्यो यथा घटस्य भूतलम् । भूतलं हि न घटं पोषयति नापि घटस्यास्तित्वं प्रयोजयति । द्वितीयो यथा राजा प्रजाजनस्य, आचार्यो वा शिष्यस्य, विषयो वा विषयिणः । तृतीयो यथा शरीरस्य जीवः । शरीरं हि स्वास्तित्वे सर्वथा जीवमवलम्बते ।

परमात्मा वा सर्वस्य । परमात्मा चिम्बरूपेण सर्वेषां जीवानामस्तित्वप्रयोजकः, अधिष्ठानतया जडवस्तूनां चास्तित्वप्रयोजकः। यद्यपि परमात्मा पोषकोऽपि भवति तथाऽपि त्रैविध्यं निर्बाधम्। उपधेयसंकरेऽप्युपाधीनामसंकरात्। अत्र तृतीय आधार आत्मेत्युच्यते। यथा शरीरस्य जीव आत्मा । परमेश्वरश्च सर्वात्मा। अयं चाऽऽत्मशब्दवाच्यस्तृतीय आधार आधेयस्य नियामकोऽपि भवति । नियामकत्वं चैतदन्तत एव न बहिः । स च क्वचित्केनचिदंशेन क्वचित्सर्वथेत्यन्यत्। तत्राऽऽद्यः शरीरस्य जीवात्मा। वार्धक्ये हि शरीरस्य शक्तौ क्षीयमाणायां न तारुण्य इव नियामको भवति जीवात्मा । तारुण्येऽपि चारुग्णमिव न रुग्णं शरीरं नियमयितुं प्रभवति। सर्वथा नियामकस्तु परमात्मा। अयमेव शास्तेत्युच्यते। तदुक्तम्–'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति । परमात्मा च जीवकृतकर्मपरवश एव जीवान्नियमयतीत्यत्र न कस्यचिदपि विवादः। तदेवं स्थिते द्वैतिनां मते जीवानामीश आधारो न तृतीयेन प्रकारेण संभवति। जीवानामपीश्वरेण सममेव नित्यत्वाभ्युपगमेनेश्वरस्य जीवास्तित्वप्रयोजकत्वाभावात्। अथ पोषकत्वेनाऽऽधारत्वं भवत्विति चेन्न। तादृशाधार आत्मशब्दस्य रूढ्यभावात्। तथा च यः सर्वेषां भूतानामात्मैवाभूदिति भवत्कल्पितद्वितीयवाक्यस्यार्थो न संभवति । अथ तत्राऽऽत्मत्वमुच्यमानं गौणमिति चेत्–'आत्मैवाभूत्' इति विधेयतया प्रतिपादितस्याऽऽत्मत्वस्य गौणत्वप्रकल्पनं नोचितम्। किंच गौणेनाऽऽत्मत्वेनाऽऽधार एकत्वबुद्धिः कथं जायेत। तथा च तत्र पूर्वोत्तरार्धयोर्हेतुहेतुमद्भावसंगतिर्न स्यात्। किंचायं जीवेश्वरभेदः कल्पित एव नतु सत्य इत्यवश्यमङ्गीकर्तव्यम्। यत आत्मप्राप्तिरेव मोक्ष इति सर्वेषां संमतं न कस्यचिदपि तत्र विवादः। मोक्षश्च ज्ञानैकसाध्यः। तमेवं विद्वानमृत इह भवति (नृ. पू. उ. ६) इति श्रुतौ विद्वानमृतो भवतीत्यनेनामृतत्वप्राप्तौ ज्ञानं साधनमुक्तम् । तत्र चेहशब्देनान्यत्र क्वाप्यमृतत्वप्राप्त्यर्थं गमनाभावः सूचितः । ज्ञानादेव तु कैवल्यम् (      ) इत्यत्रैवशब्देन ज्ञानेतरन्मोक्षसाधनं व्यवच्छिद्यते । नान्यः पन्था अयनाय विद्यते (श्वे. ३ । ८) इति श्रुत्या च ज्ञानेतरसाधनस्य निषेध एव स्पष्टं प्रतिपाद्यते । ज्ञानैकसाध्यं वस्तु च पूर्वं प्राप्तमेवेत्यवश्यमेवाङ्गीकर्तव्यं भवति। तदुक्तम्–

यस्य प्राप्तौ ज्ञानमात्रान्नाधिको यत्न इष्यते।
सोऽर्थः संप्राप्त एव स्यात्पूर्वमेवेति निश्चयः॥
अवशिष्टं विजानीयात्तत्राज्ञानं तु केवलम्॥ इति।

तथा च यथा पर्वते देवालयमिति शब्देन देवालयस्य परोक्षज्ञाने सत्यपि प्रत्यक्षज्ञानाय तत्र गमनमपेक्ष्यते तथाऽत्रापि द्वैतिनां मते जीवेश्वरयोर्भेदेनेश्वरज्ञानेऽपि तत्प्रत्यक्षायाधिकः कश्चिद्यत्नः कर्तव्यः स्यात्। तथा चोक्तश्रुतिरोधः। तथा चोक्तम्—

घटमीप्सुर्दण्डचक्रादिकं साधनमीहते।
न ध्वान्तस्थघटप्राप्त्यै दण्डचक्राद्यपेक्ष्यते॥ इति।

तथा चात्र परमात्मा तथा कल्पनीयो यथा मोक्षात्पूर्वं यत्नेनापि जीवेन प्राप्त एव स्यात्। केवलं ध्वान्तस्थानीयेन ज्ञाननिवर्त्येन केनचित्पदार्थेन स परमात्मा तदानीमन्तर्हित इति। स च पदार्थोऽज्ञानमेव। इदमेव मायाशब्देन व्यपदिश्यते। तेनान्तर्हितोऽपि मोक्षात्पूर्वं जीवेन प्राप्त एवेत्यस्यार्थस्योपपत्तये जीवेशयोरभेद एव युक्तोऽभ्युपगन्तुमिति बोध्यम्। किंच जीवेशयोरभेदे श्रुत्यन्तरमपि प्रमाणं भवति। भेदस्य सत्यत्वे हि भेदप्रयोजकधर्मवत्त्वेनेश्वरस्य सविशेषत्वं दुर्वारम्। इष्टापत्तिरेवेति चेत्—यस्यामतमिति श्रुतिविरोधः।

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्॥

येन ब्रह्म न चिन्तितं तेन ब्रह्म ज्ञातम्, येन च चिन्तितं तेन न ज्ञातम्। ज्ञानिभिरविज्ञातमज्ञानिभिश्च ज्ञातमित्यस्याः श्रुतेरुत्तानार्थः। अत्राऽऽशङ्क्यते कृमिकीटादिभिरप्यज्ञानिभिर्ब्रह्म ज्ञातं किम्। तथा शुकवामदेवादिभिः प्रसिद्धतरैर्ज्ञानिभिरपि ब्रह्म न ज्ञातं किम्। नैवम्। श्रुतेरयमाशयः—यस्यामतं निर्विशेषं ब्रह्म चिन्तनाविषयमेवेति यो वेत्ति तेन ब्रह्म यथार्थत्वेन चिन्तितम्। मतं यस्य, येन च ब्रह्म सविशेषं मत्वा चिन्तनविषयतां नीतं तेन ब्रह्म यथार्थत्वेन न ज्ञातम्। तथा च ज्ञानविषयं मत्वा विजानतामज्ञातमेव तत्। ज्ञानाविषयतां मत्वा अविजानतां ब्रह्म स्वयमेव यथार्थत्वेन प्रकाशितं भवतीति।

सविशेषं ब्रह्म मत्वा कृतमस्याः श्रुतेरभिप्रायवर्णनं तु न स्वारसिकमध्याहारलक्षणादिदोषग्रस्तं चेति हेयमेव। तथा हि—द्वैतिनां मते ब्रह्म ज्ञानविषयं भवत्येव। किंतु परिच्छिन्नत्वेन ज्ञानविषयं न भवति। तथा चात्र परिच्छिन्नत्वेनेत्यध्याहारः। अथवा विजानतामित्यत्र ज्ञाधातोर्ज्ञानविशेषे

लक्षणा स्वीकार्या भवति । किंचाविजानतां विज्ञातं विजानतां चाविज्ञात-मित्यस्याः श्रुतेरीदृशं तात्पर्यं चेदेतद्वर्णनं परमात्मनोऽसाधारणं न भवति । आम्रादिफलमपि साकल्येन ज्ञातं न भवति । रूपं स्पर्श आकारश्चेत्येषां ज्ञानेऽप्यन्तर्गतरसस्याज्ञानमेव । तस्यापि ज्ञानेऽन्तर्गतबीजस्य रूपरसादिकं न साकल्येन ज्ञायते । किंच ब्रह्मणः सविशेषत्वे तस्योपासनाविषयत्वं दुर्वारमिति ।

' यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ' ( के० ४ )

इति श्रुतिविरोधः । अत्र हि यदिदमुपासते तन्न ब्रह्मेति ब्रह्मण उपास-नाविषयत्वं स्पष्टमेव निषिद्धम् । यत्त्वत्र द्वैतमतानुसारिभिः कैश्चित्प्रजल्पितम् ' उपासते ' इति न क्रियापदम् । किंतु उप आस ते इति पदत्रयम् । उपे-त्यस्य समीप इत्यर्थः । आसेत्यास्ते इत्यर्थकं विङन्तप्रतिरूपकमव्ययम् । ते इत्यस्य तवेत्यर्थः । यदिदं तव समीपे आस्ते तन्न ब्रह्मेत्यर्थः । श्रुते-रीदृशाभिप्रायवर्णनं तु स्वस्यैवोपहासास्पदं भवति । न श्रोतॄणां मनसि लेशतोऽपि चमत्काराधायकमित्यास्तां तावत् । तदेवं द्वैतिनां मतं न श्रुतिप्रमा-णसिद्धम् ।

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवाऽऽत्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ( गी० २ । ५५)

इति गीतावाक्य आत्मन्येवाऽऽत्मना तुष्ट इत्युक्तम् । आत्मनि परमात्मन्या-त्मना चिद्रूपेण तुष्टस्तृप्त इति तस्यार्थः । तथा च जीवब्रह्मैक्यमभिप्रेत-मिति गम्यते । किंच तत्र सर्वान्कामान्मनोगतान् इत्युक्तम् । तेन च कामाः सर्वे मनोगता न त्वात्मगता इति सिध्यति । कामसमानाधिकरणाश्च बुद्धि-सुखदुःखादयः सर्वे नाऽऽत्मगुणाः किंतु मनोगुणा एव भवन्ति । तथा च निर्गुण आत्मनि भेदप्रयोजकीभूतधर्मस्य कस्याप्यभावेनार्थादेवाऽऽत्मैक्यं सिध्यति ।

भगवताऽपि चार्जुनस्याऽऽत्मयाथात्म्यज्ञानाधिकारसंपत्तये साधनचतुष्टयमेव प्रभ-वतीति मनसि कृत्वाऽऽद्यश्लोकचतुष्टयेन क्रमेण साधनचतुष्टयसंपत्तिः प्रदर्शिता । सा च पूर्वं प्रदर्शितैव ( १२ । १५ ) । तत्र साधनचतुष्टये द्वितीयं साधनं वैराग्यम् । तच्च सर्वांशेनापेक्ष्यते । लेशतोऽपि कामाभाव इति यावत् । स्वापे-

क्षयोत्कृष्टं पश्यतो मनसि तत्पदप्राप्तीच्छाऽवर्जनीयैव भवति । तथा च द्वैतिनां मते स्वापेक्षयोत्कृष्टं परमेश्वरं पश्यतां जीवानां मनसि स्यादेवेच्छेति वैराग्यं दुर्लभम् । न चोत्पन्नकामोऽपि विषयेषु दोषदृष्ट्या यथाऽन्यतो निवर्तते तथाऽत्रेशपदादपि निवर्ततेति वाच्यम् । परमेश्वरपदे लेशतोऽपि दोषस्य कल्पयितुमशक्यत्वात् । तथा च युद्धान्निवृत्तस्यार्जुनस्य पुनर्युद्धे प्रवृत्तिः कायपरिशुद्धिमन्तरेण साधनान्तरेण केनापि दुःसाध्येति मत्वा तदर्थं साधनचतुष्टयं प्रदर्शितं तत्सर्वमत्र स्पष्टी क्रियते । तत्र हि—

स्वसंशयमपाकर्तुं शुश्रूषोर्भगवद्वचः ।
मोक्षाधिकारः संप्राप्तो गीतया सव्यसाचिनः ॥
वराटिकान्वेषणाय प्रवृत्तस्यापि कस्यचित् ।
यथा चिन्तामणेर्लाभो जायते भाग्यशालिनः ॥
तत्संशयमपाकर्तुं तदानीं भगवानपि ।
तत्कायपरिशुद्ध्यर्थं गीतां संप्रोक्तवानिति ॥

अयं भावः—अर्जुनस्य दूरदृष्ट्या युद्धे प्रवृत्तस्यापि पुरतोऽवस्थितान् भीष्मादीन् सर्वान् स्वकीयान् दृष्ट्वैकपद एव विषादातिशयेन या मनोवृत्तिर्विपर्यस्ताऽभूत्साऽलौकिकं किंचित्कारणं विना नैव पूर्वावस्थां प्राप्स्यति । यतो दूरदर्शिनां प्रेक्षावतां महानुभावानामर्जुनसदृशानां नैव क्षुद्रेण कारणेन बुद्धिविपर्यासो भवति । तथाऽपि योग्येन केनचिन्महता तादृशेन कारणेन जात एव चेत्पुनः पूर्वावस्थां प्रायो नैव प्राप्स्यति तन्मतिः । तथा चात्यन्तकठिनमेतत्कृत्यं भगवन्तमन्तरेण कः संपादयितुं शक्नुयात् । अघटितघटनापटुरपि भगवांस्तदानीं लोकवदेव व्यवसितुं प्रवृत्तोऽनेकाभिर्युक्तिप्रयुक्तिभिस्तत्कार्यं साधितवान् । अत एव सा रीतिर्लोकानां भूयसां मार्गदर्शिन्यभूत् । भगवताऽपि च तदानीं कायपरिशुद्धिमन्तरेणैतत्कार्यं साधयितुमशक्यमिति पर्यालोच्यार्जुनस्य कायपरिशुद्धिः संपादिता । कायपरिशुद्धिरपि चेयं न सामान्यतः । किंतु यादृश्यात्मविज्ञानमार्गोपदेशाधिकारसंपत्त्येऽपेक्ष्यते तादृश्येवाप्राऽऽवश्यिकेत्यालोच्य तत्साधनार्थं यत्नः कृतो भगवता । तथा च—

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ( गी. ४ । ३४ )

इति तेन तत्र प्रसङ्गादुक्तम् । एतेन सर्वधर्मानित्यत्रोपसंहारात्मके श्लोकेऽहं त्वामिति भेदेन निर्देशाद्भेद एव वस्तुतः सत्य इत्यपास्तम् । अयं हि श्लोक उपसंहारात्मकः । तथा हि—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ( गी. १८।६६) ।

पूर्वं विस्तरेणोक्तस्य पुनः संक्षेपेण कथनं यत्क्रियते स उपसंहारः । उपसंहारेण हि श्रोतॄणां विषयावधारणं सौलभ्येन भवति । तेन च तत्र शीघ्रं तस्य प्रवृत्तिर्भवति । गीतायां चाऽऽत्मविज्ञानोपदेशो नैव कृतः । नापि च तादृशोपदेशाधिकारसिद्धये प्राधान्येन प्रयत्नः कृतो भगवता । किंतु तादृशाधिकारः प्रासङ्गिकतया सिद्धोऽभूदित्यन्यत् । तथा च कः प्रसङ्गोऽत्र मोक्षावस्थावर्णनस्य । आत्मविज्ञानोपदेशात्प्राक् सर्वोऽयं भेदव्यवहारोऽबाधित एवेत्यहं त्वामिति निर्देशो न विरुध्यते । यदि तु गीतायां मोक्षसाधनीभूतात्मविज्ञानोपदेशो भगवता कृतः स्यात्तस्य चानेन श्लोकेनोपसंहार इत्यत्र मोक्षावस्थावर्णनं स्यात्तर्हि त्वदुक्तेः संभवो नत्वन्यथा । सोऽपि च यथाकथंचिदेव । मोक्षावस्थाप्राक्कालीनस्थितिप्रदर्शको ह्यहं त्वेति भेदेन निर्देशो न तु मोक्षावस्थाप्रदर्शक इत्यर्थस्य तत्र बालैरपि सुज्ञेयत्वात् ।

ननु यथा माता रोगिणो बालस्यौषधग्रहणप्रवृत्त्यर्थं रोगनिवृत्तिर्माधुर्यास्वादश्चेत्येतद्द्वयमौषधभक्षणैकसाध्यमिति मत्वा ' कथमप्ययं बाल औषधग्रहणे प्रवृत्तो भवतु ' इतीच्छया तत्रोद्दिष्टामपि रोगनिवृत्तिमन्ततः कृत्वा बहिस्तस्य प्ररोचनार्थमनुद्दिष्टमप्यौषधमाधुर्यमास्वादयति तथाऽत्र भगवानर्जुनस्य युद्धे प्रवृत्त्यर्थं युद्धे प्रवृत्तिर्ज्ञानद्वारा मोक्षश्चेत्येतद्द्वयं कायपरिशुद्ध्येकसाध्यमिति मत्वा ' कथमप्यर्जुनो युद्धे प्रवृत्तो भवतु' इतीच्छया तत्रोद्दिष्टामपि युद्धे प्रवृत्तिमन्ततः कृत्वा बहिस्तस्य प्ररोचनार्थमनुद्दिष्टमपि मोक्षरूपं फलं प्रदर्शयेत् । तथा चात्र मोक्षावस्थावर्णनं संगतमेव भवति । तच्चात्रोपसंहारे पूर्वश्लोके मामेवैष्यसीत्युक्तम् । तथा हि—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ (गीता० १८।६५)

इत्यत्र मामेवैष्यसीति मोक्षावस्थां प्रदर्श्य प्ररोचितो भगवताऽर्जुनः । तस्यां चावस्थायां कर्तृकर्मणोर्भेदेन निर्देशाद्भेदस्य सत्यत्वं सिध्यति । 'ब्रह्म वेद ब्रह्मैव भवति ' ( मु० ३ । २ । ९ ) इति श्रुतिस्तु—

वस्तुनोः साम्यातिशये तादात्म्यमुपचर्यते ।
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥

इति न्यायेनौपचारिकी बोध्येति चेत्—

मैवं वादीः । न खलु श्रुत्या स्मृतिरनुवर्त्या स्मृत्यैव तु नाम श्रुतिरनुवर्त्या भवति । तथा च 'ब्रह्मैव भवतीति' श्रुतिरौपचारिकेति रिक्तं वचः । ननु निरञ्जनः परमं साम्यमुपैति ( मु० ३।१।३ ) इति श्रुत्यन्तरानुरोधेन ब्रह्मैवेति श्रुतेरौपचारिकत्वं वर्णितं न तु केवलस्मृत्यनुरोधेनेति चेत्तदपि न । परमं साम्यं हि स्वस्य स्वेनैवाऽऽयाति न तु परेणेत्यभेद एव तस्याः श्रुतेस्तात्पर्यम् । निरञ्जनः केनापि संबन्धेन रहितः । कस्यापि संबन्धस्य सत्त्वे तत्कृतं वैषम्यं दुर्निवारमेव भवति । मुक्तेश्वरयोर्भवदभिमतसाम्येऽपि सेव्यसेवकभावकृतं वैषम्यमस्त्येवेति न तस्य परमत्वम् । सेव्यसेवकयोः साम्यापेक्षया सेव्यद्वयमध्ये मिथः साम्यस्य परमत्वं को न ब्रूयात् । ननु सेव्यद्वयं द्वैतिभिर्नाङ्गी क्रियते इति चेत् । किं द्वैत्यभिमतसिद्धान्तानुरोधेन श्रुत्यर्थो योज्यते भवता । प्रत्युत श्रुतेर्यः स्वारसिकः सरलोऽर्थस्तदनुरोधेन सिद्धान्तो ग्रहीतव्यो भवति किल । ततश्च यदपेक्षयाऽन्यदधिकं साम्यं नास्ति तादृशं केनापि संबन्धेन रहितस्य यत्साम्यं तदैक्य एव पर्यवस्यति ।

आत्मैक्ये गृहीतेऽपि 'मामेवैष्यासि' इति स्मृतिर्न विरुध्यते नापि च गौणार्था ग्राह्या भवति । यस्मापणक्रियानन्तरं भेददर्शनाभावेऽपि ततः पूर्वं भेददर्शनेन मामेवैष्यसीति निर्देशस्य साम्राज्यात् । न हि 'चान्द्रं ज्योतिः प्रातरादित्यमेति' इत्यत्रैतिर्गौणार्थ इति केनाप्युच्यते, नापि युक्तिमत् । मापणार्थको ह्येतिः । मापणानन्तरमेकीभावो वाऽस्तु पार्थक्यं वाऽस्तु न विशेष इत्यास्तां तावत् ।

अथात्रान्यत्किंचिद्विचार्यते—ननु मन्मना भव, सर्वधर्मान्०(गी० १८।६५।६६) इति श्लोकद्वयेनात्र य उपसंहारः कृतोऽस्ति सोऽत्रानुचित इव दृश्यते । अर्जुनस्य युद्धे प्रवृत्तिं सपदि संपिपादयिषोर्भगवतोऽत्र—

मदुक्तिमेकां हृदये निधाय गतसंशयः ।

परित्यज्य मतीः सर्वाः सद्यश्चापं करे कुरु ॥

इत्येतादृश उपसंहार उचितः ।

अथ मन्मना भवेत्याद्युपसंहारे किमनौचित्यमिति चेत्—उच्यते ( १ ) 'मामेवैष्यसि' इत्यनेन भगवत्प्राप्तिरुक्ता । तस्या अत्रोपसंहारे कः प्रसङ्गः । तथा ( २ ) 'स्वधर्ममपि चावेक्ष्य० ( २ । ३१ ) इत्यत्र स्वधर्मस्यापरित्याग उक्तः । अत्र तु सर्वधर्मपरित्यागः कथमुच्यते । तथा ( ३ )

पूर्वं युध्यस्वेत्यनेकश उक्तम् । अत्र तु तद्विरुद्धमेकं मच्छरणगमनमेव विधीयते तच्च कथम् । तथा ( ४ ) धर्मपरित्यागं विधाय तज्जन्यपातकान्मोक्षः प्रतिज्ञातः । सोऽनुचितः । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायविरोधात् । तथा ( ५ ) पातकान्मोक्षश्च भोगप्रायश्चित्तान्यतरदन्तरेण न संजायते । तयोरन्यतरेण जायमानश्च सर्वसाधारण इति किं तत्र भगवतो विशेषकृत्यमहं त्वेत्यादिपदगम्यम् । यद्यपि भगवानिच्छामात्रेणापि पातकान्मोक्षं कर्तुं शक्तस्तथाऽपि तथा स न करोति । स्वकृतनियमानुसारेणैव तस्य वर्तनात् । मनुष्यपशुपक्ष्यादीनां नियतावयवसंनिवेशस्य वृक्षपत्रपुष्पफलादेश्च कदाऽप्यनतिक्रमात् । एवं च कथमेतदिति चेत् ।

उच्यते—अत्र ह्यर्जुनस्य युद्धेऽप्रवृत्तस्य प्रवृत्तिस्थैर्यसंपादनाय भगवत उक्तिर्गीताऽष्टादशाध्यायात्मिका । तत्राप्रवृत्तिर्द्विधा—( १ ) प्रयोजनाज्ञानेन स्वभावत एवाप्रवृत्तिः । ( २ ) ज्ञातप्रयोजनस्य प्रवृत्तीच्छोः प्रतिबन्धकवशादप्रवृत्तिश्च । तत्र प्रतिबन्धकं त्रिविधम् । ज्ञातस्य प्रयोजनस्य कैमर्थ्यप्रतीति( क ), सत्यस्य प्रयोजनान्तरस्याज्ञानम् ( ख ), पापाद्युत्पत्तिभीति( ग )श्चेति । तत्र प्रथमप्रकारेणाप्रवृत्तस्य प्रयोजनज्ञापनमुपदेष्ट्रा कर्तव्यम् । द्वितीयप्रकारेणाप्रवृत्तस्य तु प्रतिबन्धकनिरास उपदेष्ट्रा कर्तव्यः । तत्रापि भीष्मादीन्दृष्ट्वा विरक्तस्यार्जुनस्य यद्राज्यरूपे प्रयोजने कैमर्थ्यं प्रवीतं तन्न निरस्यते । अशक्यत्वात् । केवलमत्र प्रयोजनान्तरस्य मोक्षस्य ज्ञापनं तथा पापादिभीतिनिराकरणं च कर्तव्यम् । तदेव च भगवता गीतायां संपादितम् । तदनुसारेणायमुपसंहार उचित एव ।

अथानौचित्ये यत्कारणपञ्चकमुक्तं तस्य क्रमेणोत्तरमुच्यते—( १ ) मोक्षरूपं स्वधर्माचरणस्य प्रयोजनान्तरं गीतायामुक्तमिति तस्योपसंहारे ' मामेवैष्यसि ' इत्युक्तिः प्रासङ्गिक्येव । ( २ ) पूर्वं स्वधर्माचरणस्य विधिः स्वरूपतः, न तु फलतः कृतः । अत्रोपसंहारे तु तद्वैपरीत्येन धर्माचरणस्य परित्यागो न स्वरूपतः कृतः, किंतु फलम् । अथवा भोजनादिकस्य मलमूत्रप्रक्षालनादेश्च कर्मणो यथा सर्वपदेन न ग्रहणं तथा नित्यत्वेन प्राप्तस्य स्वधर्मस्यापि सर्वशब्देन न ग्रहणं किंतु तदितरस्यैव परित्यागयोग्यस्यैवात्र सर्वपदेन ग्रहणात् । अत एव च न तृतीय आक्षेपः । युद्धे प्रवृत्तः क्षत्रियश्चेत्तस्य युद्धं नित्यप्राप्तमेव भवति । ( ३ ) मामेकं शरणं व्रजेति विधिना न युद्धरूपं कर्म व्यावर्त्यते ।

मामित्यस्य 'युध्यस्व' इति कथयन्तं मामित्यर्थः। तादृशस्य मम शरणगमनं च युद्धापरित्यागेनैव। युद्धस्य शरणगमनान्तर्गतत्वात्। (४) पातकान्मोक्षोऽत्र न युद्धजन्यपापस्य ध्वंसरूपः, किंतु पातकानुत्पत्तिरूपः। अतो न 'प्रक्षालनाद्धि' इति न्यायविरोधः। (५) समुत्पन्नस्य हि पापस्य प्रकारद्वयेन विनाशः। अत्र त्वनुत्पत्तिरेव साध्या। सा च भगवत्प्रदर्शितेनैव मार्गेण जायते। अतः 'अहं त्वा०' इति विशेषत उक्तिः।

' अथात्रान्यत्किंचिदुच्यते—अत्रार्जुनस्य भगवत्प्रियत्वमुक्तम्। भक्तोऽसि मे (४। ३) इत्यनेनार्जुनस्य भगवद्भक्तत्वमुक्तम्। भक्तस्य च भगवत्प्रियत्वं द्वादशाध्यायान्ते बहुश उक्तम्। यो मे भक्तः स मे प्रियः (१२। १४) यो मद्भक्तः स मे प्रियः (१२।१६) भक्तिमान् यः स मे प्रियः (१२। १७) भक्तिमान् मे प्रियो नरः (१२। १९) भक्तास्तेऽतीव मे प्रियाः (१२। २०) इति। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः (१२। १५) इत्यत्र च हर्षादिमनोविकाररहितस्य भगवत्प्रियत्वमुक्तम्। किंत्वेतत्सर्वं 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः (९। २९) इत्यनेन विरुध्यते। तत्र हि भगवतः कोऽपि प्रियो नास्तीति प्रतीयत इति चेत्।

उच्यते—प्रियत्वं प्रेम। तच्च द्विविधम्। स्वाभाविकं नैमित्तिकं च। तत्र स्वाभाविकं जन्मनः प्रभृति यावदायुर्विद्यमानम्। यथा मात्रादीनां पुत्रादिषु। नैमित्तिकं च निमित्तानन्तरमुत्पद्यमानं यावन्निमित्तं विद्यमानम्। निमित्तानि *पोपास्योपासकभाव, गुरुशिष्यभाव, स्वामिभृत्यभाव, पोष्यपोषकभावदांपत्यादीनि।* तत्राऽऽद्यं प्रेम भगवतो न संभवति। परमात्मनि जीवात्मनामवस्थितिराभासवादेनावच्छेदवादेन प्रतिबिम्बवादेन कथमपि भवतु। सा च जीवात्मसु सर्वत्र समैव। न तत्र मनुष्यपशुपक्षिभेदेनाप्यवस्थितिवैशेष्यम्। अतस्तन्मूलको न क्वचिदपि द्वेषः प्रेम वा। अत एव न मे द्वेष्योऽस्ति न प्रिय इत्यत्र कारणं समोऽहं सर्वभूतेष्विति प्रदर्शितम्। नैमित्तिकं प्रेम तु भगवति संभवति। अत एव तत्र यो मे भक्तः स मे प्रिय इत्येवं प्रियत्वे भक्तिः कारणत्वेन प्रदर्शिता। भक्तिश्चोपासकस्य मनोवृत्तिविशेषः। तथा च नैव गीतावचनयोर्मिथो विरोधः। प्रियत्वस्य द्वैविध्येनाविरोधात्। तदेवमर्जुनस्य भगवत्प्रियत्वं निर्बाधं सिद्धं भवति। इदं चात्र बोध्यम्। यथा क्षेत्रे प्रथमतो हलेन भूमेर्विलेखनं क्रियते तेन चाङ्कुरनिर्गमप्रतिबन्धकं

काठिन्यं विनाश्यते। ततो बीजावापः क्रियते। ततः पुनः समीकरणं क्रियते। तेन चाङ्कुरवृद्धिप्रतिबन्धकं तृणकण्टकपाषाणादि दूरी क्रियते। ततः क्षेत्रमभितः कण्टकशाखावरणं क्रियते। तेन चाङ्कुरविमर्दको गोमनुष्यादिसंचारः प्रतिबध्यते। एतावत्पर्यन्तं जीवाधीनम्। वर्षणं चेश्वराधीनम्। वर्षणेन च कणिशोद्गमद्वारा सस्यनिष्पत्तिः फलं संपद्यते। तथा मानसे क्षेत्रे प्रथमतः प्रवेशितेन हलस्थानीयेन भगवत्स्वरूपेण मनोवृत्तेर्विलेखनं क्रियते। तदेतदुक्तं मन्मना भवेति। तेन चाङ्कुरनिर्गमप्रतिबन्धकं (मनोवृत्तेः) काठिन्यं विनाश्यते। मनोवृत्तिर्हि विषयान्तरैर्बहुभिर्निरन्तरसान्द्रखचिता व्यसनासक्तस्येव कठिना चिराद्भूत्। ततस्तस्यां मनोवृत्तौ भक्तिरूपं बीजमोप्यते। तदेतदुक्तं मद्भक्तो भवेति। ततः पुनर्मनोवृत्तेः समीकरणं क्रियते। तेन च तत्र पूर्वं पूज्यत्वेन प्रविष्टा इन्द्रादयो देवा भगवद्भक्त्यङ्कुरवृद्धिप्रतिबन्धका अपसार्यन्ते। तदेतदुक्तं मद्याजीति। मदेकयाजी भवेत्यर्थः। ततो मां नमस्कुरु, इत्यनेन मामेव नमस्कुर्वित्यर्थकेन मानसक्षेत्रस्याऽऽवरणं क्रियते। तेन च तत्र देवद्विजगुरुप्राज्ञादीनां नमस्कार्यत्वेन संचारो भगवद्भक्तिबीजाङ्कुरविमर्दकः प्रतिबध्यते। एतावत्पर्यन्तं भक्ताधीनम्। ततो वर्षणस्थानीयं तदनुगुणबुद्धिप्रदानं भगवदधीनम्। ददामि बुद्धियोगं तम् (१०।१०) इत्युक्तेः। वर्षणेन फलप्राप्तिरनुभवसिद्धा। बुद्धियोगेन भगवत्प्राप्तिश्च 'ददामि बुद्धियोगं तमित्यनन्तरं' 'येन मामुपयान्ति ते' इति भगवदुक्त्यैव सिद्धा। ननु चात्र भक्ताधीनं मन्मना भवेत्यादि निर्दिष्टम्। तथा फलमपि मामेवैष्यसीति निर्दिष्टम्। भगवदधीनं बुद्धियोगप्रदानमत्र कुतो न निर्दिष्टमिति चेत्–उच्यते। प्रथमतो ह्यत्र राज्यलोभेन युद्धकर्मणि प्रवृत्तोऽर्जुनो भीष्मद्रोणादीन् पुरतो दृष्ट्वा तथा विरतोऽभूत्। राज्यलोभोऽपि समूलकाषं कषितोऽभूत्। एतादृश्यामवस्थितावपि च पुनस्तस्यार्जुनस्य पुनः प्रवृत्तिः कथमपि संपादनीया। तस्याः संभवश्च राज्यापेक्षयाऽप्यधिकफललोभेन कदाचित्स्यात्। कदाचित्कर्तव्यमात्रबुद्धिरुदिता चेत्तया स्यात्। अत्र तु भगवता द्वयमपि प्रयुक्तम्। तत्राऽऽद्यं देवैरपि प्रार्थनीयं मोक्षरूपं महत्फलम्। तच्च 'सोऽमृतत्वाय कल्पते' इत्यादिभिर्बहुषु स्थलेषु भङ्ग्यन्तरेण प्रदर्शितम्। तत्र च सर्वत्रोक्तिवैचित्र्यमात्रमेव। तात्पर्यं तु मोक्षरूपमेकमेव। युद्धप्रवृत्तेर्द्वितीयं कारणं कर्तव्यमात्रबुद्धिरूपं च यद्भगवता प्रदर्शितं तदपि मोक्षसंबद्धमेव। यतो मोक्ष आत्मविज्ञानमन्तरेण न कथमपि सिध्यति। आत्मविज्ञानं च चित्तशुद्धिमन्तरेण न संपद्यते। चित्तशुद्धिश्चाहंभाव-

फलाभिसंधिरहितेन कर्मणैव सेद्धुमर्हति । तादृशं कर्म च कर्तव्यमात्रबुद्ध्युद्गमन्तरेण नैव संभवतीति । तथा चात्र द्विविधकारणमध्ये मुख्यं कारणं मोक्षरूपमेकमेव । तदेव चात्र मामेवैष्यसीति निर्दिष्टम् । मोक्षरूपफलप्राप्तिप्रकारश्च बुद्धियोगप्रदानरूपः ।

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ( १० । १० )

इत्येवं प्राङ्निर्दिष्टत्वादत्र न निर्दिष्टः । नन्वेवं

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ( ९ । ३४ )

इत्येवं मामेवैष्यसीत्यन्तेन सर्वमेवैतन्निर्दिष्टमेव । तत्किमर्थं पुनरत्र निर्दिश्यत इति चेत्—अत्रोच्यते । मामेवैष्यसीति ह्यत्र कार्यम् । मन्मना भवेत्यादिकं तस्य कारणम् । कार्यकारणभावं ज्ञात्वैव हि कार्यार्थिनः कारणे प्रवृत्तिः । तथा प्रवर्तमानस्य च द्वयी विधा । अस्मात्कारणादनेन प्रकारेण कार्यप्राप्तिर्भवतीत्येवं कार्यप्राप्तिप्रकारज्ञस्तादृशे प्रकारे शक्यतां च ज्ञात्वा कश्चित्प्रवर्तते । कश्चित्तु तादृशं प्रकारमजानन्नप्युपदेष्टुर्वचसि विश्वासातिरेकात्प्रवर्तते । तत्र चायं विशेषः—

फलप्राप्तिप्रकारज्ञो यद्यप्याशु प्रवर्तते ।
किंत्वसंभावनाग्रस्तो निर्वर्तेतापि कर्हिचित् ॥
यस्तु प्रवर्तते लोके विश्वासादेव केवलम् ।
मन्दं प्रवर्तमानोऽपि न निवर्तेत कर्हिचित् ॥ इति ।

प्रकृते चार्जुनस्य युद्धार्थं प्रवृत्तौ शैघ्र्यं स्थैर्यं चेति द्वयमपि संपादनीयं भगवतो मनसि । तत्र शैघ्र्यं प्रथमतः साध्यमिति तदर्थं पूर्वं नवमेऽध्याये मामेवैष्यसि ( ९ । ३४ ) इत्युत्तरं 'युक्त्वैवमात्मानं मत्परायणः' इत्यनेन फलप्राप्तिप्रकारस्य दिक् प्रदर्शिता । स च प्रकारो दशमे 'ददामि बुद्धियोगं तं येन मामुपयान्ति ते ( १० । १० ) इत्यनेन स्पष्टीकृतः । अत्राष्टादशे चाध्याये युद्धे प्रवृत्तोऽर्जुनो यथा पुनस्ततो न निवर्तेत तथा स्थैर्यसंपादनाय स्ववचसि विश्वासातिशयोत्पादनाय 'मामेवैष्यसि' ( १८ । ६५ ) इत्युत्तरं 'सत्यं ते प्रतिजाने' इत्युक्तम् । यद्यपि भगवद्वचस्यर्जुनस्य स्वाभाविक एव विश्वासातिशयस्तथाऽप्यभिमन्युवधाद्यालोच्य विरक्त्युत्पत्त्या कदाचिद्युद्धा-

निवृत्तिरर्जुनस्य स्यादिति शङ्कानिवृत्तय एवेदं भगवतोक्तम् । शङ्का हि स्नेहातिशयेनोद्भवति । तथा च कालिदास आह—अतिस्नेहः पापशङ्कीति ( शाकु० ) एतन्मूलकमेव च ' सत्यं ते प्रतिजाने ' इत्युत्तरं ' प्रियोऽसि मे ' इति भगवन्मुखान्निर्गतमित्यास्तां तावत् ।

अन्यच्च किंचिदुच्यते—सर्वधर्मान्परित्यज्येत्यत्र सर्वपदस्यासंकोचेन प्रवृत्तत्वादत्र यद्यपि ब्रह्मचर्याद्याश्रमाणां ब्राह्मणादिवर्णानां चातुर्वर्ण्यव्यतिरिक्तानां म्लेच्छादीनां च ये धर्मास्तेषां सर्वेषां ग्रहणं संभवति तथाऽपि सर्वधर्माणां परित्यागकर्मत्वेनाभोक्तत्वात्परित्यागस्य च प्राप्तिपूर्वकत्वावश्यंभावाद्ये धर्मास्तदानीमर्जुनस्य कर्तव्यत्वेनोपस्थितास्त्यक्तुं शक्याश्च भवन्ति तथाविधा एव सर्वे गृह्यन्ते । तादृशाश्च धर्मा अत्र द्विविधाः—अर्जुनस्य क्षत्रियत्वेन क्षत्रियजात्युचिताः स्वधर्मत्वेनोपस्थिताः, अन्ये च तदानीं भीष्मद्रोणादीन्पश्यतो दयार्द्रचेतसो मनस्युपस्थिताः । आद्याः शस्त्रग्रहणादयः स्वधर्माः, द्वितीयाश्च शस्त्रन्यासादयः । द्विविधानामप्यत्र त्याज्यत्वेन ग्रहणाय सर्वपदोक्तिः । अन्यथा धर्मान्परित्यज्येत्येव केवलमुक्तं चेत्तत्र स्वधर्माणामेव ग्रहणं स्यान्न तु शस्त्रन्यासादीनाम् । न च स्वपदानुक्त्या शस्त्रन्यासादीनामपि ग्रहणं स्यादिति वाच्यम् । यतः स्वपदानुक्तावपि धर्मपदात्स्वधर्मप्रतीतिरौत्सर्गिकी । देवदत्तोऽयं धर्मवान् इतिवत् । शस्त्रन्यासादीनां चात्र त्याज्यत्वेन ग्रहणमत्यावश्यकम् । अर्जुनस्य पूर्ववत्पुनर्युद्धे प्रवृत्तिसंपिपादयिषयैवात्र भगवतो वक्तुं प्रवृत्तत्वात् ।

नन्वेवमर्जुनस्य पुनः पूर्ववद्युद्धे प्रवृत्तिसंपिपादयिषया भगवतो वक्तुं प्रवृत्तिरिति सत्यमेव । किंतु तदनुरोधेनात्र स्वधर्माणां शस्त्रग्रहणादीनां ग्राह्यत्वोक्तिरावश्यकी न तु त्याज्यत्वेनोक्तिः । अत्र केवलं शस्त्रन्यासादिविषयिणी सांप्रतिकी मनोवृत्तिरर्जुनस्य संजाता सैव निरसनीया भवति । तथा च—

' त्यक्त्वेमां स्वमनोवृत्तिं मामेकं शरणं व्रज '

इत्येव वक्तव्यं न तु सर्वधर्मानिर्वाति चेन्नैवम् । धर्मत्यागोऽत्र न स्वरूपतो विवक्षितः किंतु फलतः । फलतस्त्यागश्च शस्त्रग्रहणादीनामप्यत्राऽऽवश्यक एव । सुखदुःखे समे कृत्वा० ततो युद्धाय युज्यस्व ( २ । ३८ ) मा कर्मफलहेतुर्भूः ( २ । ४७ ) इत्येवं भगवतैव प्रागुक्तत्वात् । नन्वत्र ' स्वरूपतस्त्यागो न विवक्षितः किंतु फलतः ' इति कथमवगम्यत इति चेत्—उच्यते । परित्यज्येति क्त्वा-

प्रत्ययेन बोधितः परित्यागस्य 'मामेकं शरणं व्रज' इत्येवमुक्तया शरणगमनक्रियया सह संबन्धः शब्दत एवात्र प्रतीयते। तत्र च मामित्यर्थान्तरे संक्रमितम्। अशोच्यानन्वशोचः (२।११) इत्याद्युक्तप्रकारेण कथयन्तं मामिति तस्यार्थः। तथा चात्र धर्मपरित्यागपूर्वकशरणगमनं न केवलाया भगवद्भक्तेः किंतु तादृशोक्तिरूपविशेषणविशिष्टायाः। तच्च तादृशोक्त्यनुल्लङ्घनेनैव स्वरूपं लभते न त्वन्यथा कथमपि। तादृशोक्तौ च युद्धस्य स्वरूपत उपादेयत्वं युध्यस्वेत्येवमनेकशो दृश्यते। केवलं तत्फलस्य 'मा कर्मफलहेतुर्भूः' इति त्याग उक्तो दृश्यते। अतस्तथैवात्र त्यागो विवक्षित इति सिध्यति।

नन्वेवं यथा शस्त्रग्रहणादीनां स्वधर्माणां स्वरूपतो न त्यागस्तथा तदानीमर्जुनस्य मनसि कर्तव्यत्वेनोपस्थितानां शस्त्रन्यासादीनां धर्माणामपि स्वरूपतस्त्यागो न स्यात्। उभयोरप्येकेनैव सर्वधर्मानिति पदेन गृहीतत्वेन परित्यागे तदन्वयस्याविशेषात्। शस्त्रन्यासादयो धर्मास्त्वत्र स्वरूपतोऽपि नैवेष्टा भगवतः। तथा चैकं साधयतोऽपरं प्रच्यवत इति न्यायापातः। यथा—

पुत्रावियोगमाधित्सुर्भार्ययाऽत्याजि शंतनुः।

तथा च कथमेतदिति चेत्—भ्रान्तोऽसि। यथा स्वधर्माचरणं फलेच्छायामपि भवति फलेच्छाया अभावेऽपि भवति न तथा तदितरधर्माचरणम्। तत्तु फलानुसंधान एव भवति। तथा च फलतस्त्यागे स्वरूपतस्त्यागोऽवश्यंभाव्येव। तदुक्तम्—

परधर्मे प्रवृत्तिर्हि न फलेच्छां विना क्वचित्। इति।
यथा सुखस्य दुःखस्य तज्ज्ञानाव्यभिचारिता।
मायिकानां पदार्थानामाभासाव्यभिचारिता॥ तथैवैतत्।

ननु फलेच्छयाऽपि स्वधर्मस्यानुष्ठेयत्वं श्रुतिस्मृत्यादिषूच्यते। तथा च कथमत्र फलेच्छायाः सर्वथा त्यागो भगवतोच्यत इति शङ्कानिरासार्थमेकमित्युक्तम्। 'श्रुतिस्मृत्यादिषु किमुक्तमित्येवमन्यत्र दृष्टिप्रक्षेपस्य नायमवसरः। मया यदुच्यते तत्रैव केवलमिदानीं दृष्टिं निधेहि' इत्येवं भगवत एकमित्युक्तवतोऽभिप्रायः। ननु पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः (१।३६) इत्युक्तरीत्या पापानुत्पत्तिरूपं फलमनुसंधायैवार्जुनस्य मनसि शस्त्रन्यासादयः परकीयधर्माः समुपस्थिताः। इदानीं तु भगवता फलतस्त्याग उक्तः। तथा च किं भगवतो मतिः

' करोत्वयमर्जुनो भीष्मद्रोणादिवधम्, भवतु पापम्, ईदृशी समभूत् । तथा तु भगवति कथमपि न संभवः । तथा चात्र भगवता कथं त्याग उक्त इति चेत्तत्रोत्तरार्धमाह—अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीति । त्वदनुसंहितं पापानुत्पत्तिरूपं फलं प्रकारान्तरेण साधयिष्य एवाहमिति भगवतो भावः । अत एव चात्र धर्मफलानां त्यागो नोक्तः। त्वदभीप्सितधर्मफलस्य पापानुत्पत्तिरूपस्य प्रकारान्तरेण साधयिष्यमाणत्वात् । किंतु फलतो धर्माणां त्याग उक्तः । पापानुत्पत्तये त्वदभीप्सितं शस्त्रन्यासादिरूपं कारणं न युक्तमित्याशयः । तथा हि । शस्त्रन्यासे स्वधर्मत्यागजन्यपातकसंभावना ' अथ चेत्त्वमिमम् ' पापमवाप्स्यसि (२ । ३३) इत्यत्रोक्ता । शस्त्रग्रहणे तु भीष्मद्रोणादिवधजन्यपातकसंभावना ' पापमेवाऽऽश्रयेदस्मान्० ' ( २ । ३६ ) इत्यत्रोक्ता । सेयमुभयतःस्पाशा रज्जुः । उभयतः स्पाशो बन्धो यस्यास्तादृशरज्जुवदत्र वर्तनप्रसक्तिः । अर्जुनाभीप्सिते शस्त्रन्यासे तु भीष्मद्रोणादिवधप्रसक्त्यभावादेका पातकसंभावना निरस्ता भवेत् । द्वितीया तु तदवस्थैव । भगवांस्तु तं द्विविधादपि पातकान्मोक्तुमिच्छति । अतः सर्वपापेभ्य इत्यत्र सर्वग्रहणम् । द्विविधादपि पातकान्मोक्षस्तु न शस्त्रन्याससाध्यः कथमपि । किंतु शस्त्रग्रहण एव कथंचित्साध्यो भवेत् । तत्प्रकारस्तु ' सुखदुःखे समे कृत्वा० युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ( २ । ३८ ) इति प्रागुक्तः । किंच यत्र न फलाभिसंधिर्नापि कर्तृत्वानुसंधानं तत्र तत्कर्म न कृतं भवति किंतु जातम् । अदृष्टं च पुण्यपापरूपं कर्तरि संक्रामति न त्वकर्तरीति न पापलेपसंभवः । एतदपि—

' बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ( २ । ५० )

इत्यत्र प्रदर्शितम् । कर्मकर्तृत्वेऽपि तदकर्तृत्वं कर्तृत्वानुसंधानाभावाद्भवति । तथा च चातुर्वर्ण्यम्० ( गी० ४ । १३ ) इति श्लोके

' तस्य कर्तारमपि मां विद्ध्यकर्तारम् '

इत्युक्तम् । अत एव योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा० ( २ । ४८ ) ' तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ' ( ३ । ९ ) इत्यत्र सङ्गत्याग उक्तः । कर्मणा सह सङ्गश्च कर्तुः कर्तृत्वानुसंधानमेव । तत्त्यागश्च कर्तृत्वानुसंधानस्य शक्यत्वे सति तदकरणम् । न तु क्रियात्याग एवाकरणम् । ' सङ्गं त्यक्त्वा कर्माणि कुरु ' मुक्तसङ्गः समाचरेत्येवं कर्मणो विहितत्वेन क्रियाया अवर्जनीयत्वेन तत्त्यागस्यासंभवात् । कर्तृत्वानुसंधानरूपस्य सङ्गस्य च त्यागः

कर्तृत्वे सत्यपि संभवति । तथा च यत्र कर्तृत्वानुसंधानस्य शक्यत्वे सति यस्तादृशकर्तृत्वानुसंधानत्यागस्तत्रैव तादृशकर्मजन्यं पुण्यपापरूपमदृष्टं नोत्पद्यते । निद्रायां तु लत्ताप्रहारादिकर्मकर्तुर्निद्राणस्य मनोवृत्तेर्विलीनत्वेन न तदानीं तादृशकर्मकर्तृत्वानुसंधानस्य शक्यत्वम् । तथा जागृतावपि सत्कर्मासत्कर्म वाऽज्ञानेन यद्भवति तत्र मनोवृत्तेर्विद्यमानत्वेऽपि तस्यां विषयतया तादृशकर्मणोऽप्रवेशान्न तदानीं तादृशकर्मकर्तृत्वानुसंधानस्य शक्यत्वम् । अत उक्तस्थलद्वये कर्तृत्वानुसंधानाभावेऽपि पुण्यपापरूपमदृष्टं लेशत उत्पद्यत एव । कर्तृत्वानुसंधानस्य शक्यत्वसहितो योऽभावः स एवादृष्टानुत्पत्तौ कारणं भवति । ईदृशश्च कर्तृत्वानुसंधानस्याभावोऽर्जुनेन युद्धकाले संपादनीय इति भगवतो भावः ।

अथात्र भगवता मनसीत्थं संभावितं स्यात्—यदेतदुक्तरूपं कर्तृत्वाननुसंधानं तदुक्तं सुकरमध्यवसितुं दुष्करम् । जगद्वैचित्रीनिर्मात्रा मया यथा—

तस्य कर्तारमपि मां विद्ध्यकर्तारम् ( ४ । १३ )

इत्युक्तरीत्या कर्तृत्वाननुसंधानं संपाद्यते तथाऽनेनार्जुनेन संपादयितुमशक्यम् । यतोऽस्यार्जुनस्य प्रवृत्तिरीदृशी संदृश्यते “ शस्त्रन्यासे स्वधर्मत्यागजन्यपापसंभावना, शस्त्रग्रहणे भीष्मादिवधजन्यपातकसंभावना । द्विविधात्पातकान्मोक्षस्त्वावश्यकोऽपि योग्योऽपि च मया संपादयितुमशक्यः । का गतिः । अन्यतरत्सोढव्यमेव ” इति मनसि कुर्वतः शस्त्रन्यासे मतिरासीत् । तथा च पूर्वमुक्तम् ‘ विसृज्य सशरं चापम् ’ ( १ । ४७ ) ‘ न योत्स्य इति गोविन्दमुक्त्वा ’ ( २ । ९ ) इति । एवं चास्य द्विविधात्पातकान्मुक्तो भवेयमितीच्छाऽपि न दृश्यते । युक्तं चैतत् । यतः—

उचितायाप्यशक्याय कार्याय कृतबुद्धयः ।
महासत्त्वा अपि प्राज्ञाः स्पृहयन्ते न कर्हिचित् ॥

इत्यभियुक्तोक्तिरेतदेव कथयति । ईदृशीमर्जुनस्य मनोवृत्तिं दूरीकुर्वन्नाह भगवान्—सर्वपापेभ्यो मोक्षयिष्यामीति । मुचेः सन्नन्ताण्णिच् । णिजर्थस्य त्वामिति कर्म न तु मुचेरिति । मुचेरकर्मकत्वात् । ‘ मुचोऽकर्मकस्य ’ ( पा. सू. ७ । ४ । ५७ ) इति सूत्रेण गुणः । ‘ द्विविधादपि पातकान्मुक्तो भवेयम् ’ इतीच्छामुत्पादयामीत्यर्थः । अथाशक्यार्थविषये कथमिच्छा भवेदिति संदेहं निराकुर्वन्नाह—मा शुच इति । मा शुच इति पदद्वयेन—

'मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव' (१६ । १५)
इति पूर्वोक्तिं स्मारितोऽत्रार्जुनो भगवता। तत्र
'दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता (१६ । ५)
इति पूर्वार्धम्। तथा चात्र द्विविधादपि पातकान्मोक्षस्त्वया दैवीं संपदमभिजातेन नैवाशक्य इति विभावनीयः। अशक्य इति भावना च तवेयं मोहमूलिकैव। सर्वथा तां त्यजेत्यभिप्रायः। तथा चैतदनुसारेणैवाग्रे 'नष्टो मोहः स्मृतिर्लब्धा' (१८ । ७३) इत्यर्जुनेनोक्तम्। अत्रेदं बोध्यम्—यत्र विधिवाक्ये क्त्वाप्रत्ययान्तस्य निर्देशस्तत्र स विधिः स्ववाचकप्रत्ययप्रकृतिभूतधातूपस्थाप्यक्रियामात्रं कक्षीकृत्य न पर्यवस्यति किंतु तादृशक्रियापूर्वकालीनक्रियामपि कक्षी करोति। केवलं तत्र क्त्वाप्रत्ययप्रकृतिभूतधातूपस्थाप्यक्रियाया विधिर्न स्वातन्त्र्येण। किंतूत्तरकालीनक्रियाङ्गत्वेनैव। तथा चात्र सर्वधर्मपरित्यागस्य विधिः शरणगमनाङ्गत्वेनैवेति सिद्धम्। शरणं गच्छतश्च शरण्यस्येच्छानुसारेण सर्वथा वर्तनं शरण्यस्याऽऽज्ञाया अंशेनाप्यनुल्लङ्घनं च यथा भवेत्तथा मानसिकः संकल्प आवश्यकः। प्रकृते च शरण्यो भगवान्। तेन च

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय (२ । ४८)
इत्येवं प्रागाज्ञप्तमेव। तादृशाज्ञाया अपरित्यागेनात्र धर्मपरित्यागश्च कीदृश इति चेत्—उच्यते। धर्मशब्दश्च पुत्रपत्न्यादिशब्दवन्नित्यसापेक्षः कस्य धर्म इति। यदि च तत्रामुकस्येति न ज्ञायते न तावत्तस्य कर्मणो धर्मत्वमवबुध्यते। अथ च नैसर्गिकः शास्त्रग्रहणादिस्तदानीं कर्तव्यत्वेन भवीतः शास्त्राभ्यासादिर्वा योऽर्थ उपस्थितस्तत्र 'ममायं धर्मः' इत्येवमर्जुनस्य या मदीयत्वबुद्धिः स एव सङ्गः। तस्य सङ्गं त्यक्त्वेति पूर्वकृतभगवदाज्ञानुसारेण त्याग उपस्थितार्थे मदीयत्व(मत्कृतत्व)बुद्धित्यागे यो धर्मस्य धर्मत्वेनावबोधाभावः स धर्मपरित्याग एव भवति। तथा च कर्मणि कर्तृत्वानुसंधानाभावेऽर्थादेव धर्मपरित्यागः सिध्यति। एतेन—

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि (२ । ३०)
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि (२ । ३३)

इति पूर्वमुक्तम्। अत्र तु तद्विरुद्धं 'सर्वधर्मान् परित्यज्य' इत्युच्यत इति भगवदुक्तौ पूर्वापरविरोध इत्यपास्तम्। वस्तुतो धर्मस्य सतोऽनुष्ठानं पूर्वमुक्तम्।

अत्र तु सत्यप्यनुष्ठाने केवलं तत्र धर्मत्वबुद्धिर्निराकृतेत्यविरोधात् । एवं चात्र सर्वधर्मपरित्यागविधिर्न वस्तुतः किंतु फलत एव धर्मत्वबुद्धित एव वेति संकुचित एवात्र विवक्षितः । एतेनेदानींतनाः केचित्कर्मभ्रष्टाः 'माऽस्तु संध्याग्निहोत्रं ब्रह्मयज्ञश्च । मा भूवंश्च तपांसि यज्ञा वा । केवलं श्रीकृष्ण एवास्माकं रक्षितेति भावनीयम्' इत्येवं वदन्तस्तत्र च--

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज

इति गीतावचनं प्रमाणयन्तः परास्ताः । अत्र गीतावचने हि पूर्वोक्तप्रकारेणोपदेष्टुर्भगवतः शरणगमनं प्राधान्येन विधीयते । तदनुसारेण तत्रत्योपदेशसंरक्षणाय सर्वधर्मपरित्यागविधेः संकोचस्यावश्याङ्गीकर्तव्यत्वात् । न च सर्वधर्मपरित्यागविध्यनुसारेणोपदेष्टृशरणगमनविधेरेव संकोचोऽस्तु । तथा च नोपदेशविशिष्टस्य शरणगमनं किंतु केवलस्यैव भगवत इति वाच्यम् । गुणविध्यनुसारेण प्रधानविधिसंकोचस्यान्याय्यत्वात् । तदुक्तमभियुक्तैः--

प्रकृत्यैव विधेर्व्याप्तिरसंकोचेन जायते ।
यदि मुख्यविधेर्बाधः स्यादङ्गविधिना ततः ॥
प्रधानविध्यबाधाय संकोचोऽङ्गविधेर्मतः ॥ इति ।

अत एवात्रोक्तवैपरीत्येन

'मामेकं शरणं गत्वा सर्वधर्मान्परित्यज'

इति नोक्तम् । तथा सति सर्वधर्मपरित्यागविधेः प्राधान्यापत्त्या तत्संकोचस्य ग्रहीतुमशक्यत्वात्प्रागुक्तपूर्वापरविरोधदोषापत्तेः । तथा च

'सदा गुरुं विचार्यैव वक्तव्यं राजसंसदि'

इत्यत्र राजसंसदि वक्तव्यमिति प्रधानविध्यनुसारेण तत्रत्यवचनमेव कक्षीकरोति । गुरुं विचार्येत्यङ्गविधिर्न तु शौचमुखमार्जनादिकमपि ।

अथात्रेदं विचार्यते--मामेकं शरणं व्रजेत्यत्रैकमिति किं मामित्यस्य विशेषणमथवा शरणं व्रजेति शरणगमनक्रियायाः । नन्विदं शरणगमनक्रियाया एव विशेषणं भवितुमर्हति । तथा हि--मिथः संबद्धे वाक्यद्वय एकस्मिन्नेव वाक्ये वा सर्वशब्द एकशब्दश्चेति द्वयं निर्दिष्टं चेत्तयोश्चैकत्रैव विशेष्योपादानेऽन्यत्रापि तादृशमेव विशेष्यं ग्राह्यत्वेनोपतिष्ठत इति हि वाक्यविदां समयो न्यायसिद्धः । प्रकृते च सर्वशब्दार्थस्य विशेष्यत्वेन धर्मो निर्दिष्टः । धर्मश्च क्रिया-

विशेष इत्येकशब्दार्थस्यापि शरणगमनरूपः क्रियाविशेष एव विशेष्यं भवितुमर्हति। मामित्यस्यार्थो भगवांस्तु न क्रियाविशेष इति चेन्नैवम्। धर्मो हि रूपद्वयेनोपादेयो भवति–अनुष्ठेयत्वेन रक्षकत्वेन च। धर्मो रक्षति रक्षित इत्युक्तेः। रक्षित इत्यस्य यथावदनुष्ठित इत्यर्थः। तथा च यदि सर्वधर्मान्परित्यज्येत्यत्र रक्षकत्वेन रूपेण धर्मपरित्यागो विधीयते तदा मामित्यस्यार्थो भगवानपि रक्षकत्वसादृश्यादेकमित्यस्य विशेष्यं भवितुमर्हति। तथा च पूर्वोक्तः संशयस्तदवस्थ एवेति चेत्।

अत्रोच्यते। अस्मिंश्च संशये मामित्यस्यैकमिति विशेषण एकशब्दबोध्यमवधारणं रक्षकस्य स्यात्। मद्व्यतिरिक्तेऽन्यत्र क्वापि 'अयं रक्षकः' इति रक्षकत्वेन दृष्टिं न विधेहीति। शरणं व्रजेत्यस्य विशेषणे तु कर्तव्यस्यावधारणं स्यात्। मच्छरणगमनमित्येकमेवेदानीं त्वयाऽनुष्ठेयं न त्वन्यत्किंचिदिति। उभयथाऽपि त्विष्टमेव। एवं चात्र सर्वधर्माणामनुष्ठेयत्वरूपेण न त्यागः किंतु रक्षकत्वरूपेणैव। सर्वधर्मानुष्ठानं तु भवतु मा वा भूत्तत्रोदासीन एवायं परित्यागविधिः। अत एवाग्रे युद्धे प्रवर्तमानमर्जुनमयं विधिर्न विरुणद्धि। ननु स्वधर्मानुष्ठाने पातकसंभावनाया अभावेन किमर्थमुक्तमुत्तरार्धे पापेभ्यो मोक्षयिष्यामीति। ईदृशी ह्यस्मिञ्श्लोके पूर्वार्धोत्तरार्धयोस्तत्र संगतिर्यत्पूर्वार्धे विहितेऽपि सर्वधर्मपरित्यागे तत्र पापोत्पत्तिशङ्कयाऽर्जुनस्य प्रवृत्तिर्न स्यात्। अतः प्रवृत्तिसिद्ध्यर्थमुत्तरार्धे पापान्मोक्षः प्रतिज्ञातो भगवतेति। यदि च धर्मस्यानुष्ठेयत्वेन परित्यागो न विहितस्तर्ह्युक्ता संगतिर्न संभवतीति चेत्–सत्यम्। तादृशी संगतिः समीचीना किल। किंतूत्तरार्धे यः पापान्मोक्ष उक्तः स किंपापनिमित्तं भगवताऽनुसंधायोक्तः स्यादित्याकाङ्क्षायां पूर्वार्धोपस्थितमेव किंचिन्निमित्तं भगवता मनस्यनुसंहितं भवति। पूर्वार्धोपस्थितं चात्र निमित्तद्वयम्। प्रथमचरणोपात्तः सर्वधर्मपरित्याग एकं निमित्तम्। द्वितीयचरणे च मामित्यस्य युद्धे प्रवर्तयन्तं मामित्यर्थेन युद्धे संभावितः स्वजनवधो द्वितीयं निमित्तम्। अत्र प्रथमचरणोपस्थितं शाब्दम्। द्वितीयचरणोपस्थितं त्वर्थगत्याऽवसेयम्। तथाऽपि तदेवात्र भगवता मनस्यनुसंहितं भवति। युध्यस्वेत्यसकृत्तदुक्त्या युद्धत्यागस्य भगवतोऽनिष्टत्वेन सर्वधर्मपरित्यागस्य फलत एव ग्रहणात्। द्वितीयचरणोपस्थितत्वेनोत्तरार्धस्य प्रथमचरणापेक्षया संनिहिततरत्वाच्च। श्रोत्रा चार्जुनेन–

'कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्' ( १ । ३९ )
इत्येवं तस्यैव शङ्कितत्वाच्च । एतेन सर्वधर्मान्परित्यज्येत्यत्र धर्मपरित्यागः स्वरूपेणैव ग्राह्यः । तथा सत्येव धर्मत्यागमूलकपातकसंभवेन सर्वपापेभ्यो मोक्षयिष्यामीत्युत्तरार्धसंगतिरित्यपास्तम् ।

किंच संगतिसामीचीन्याय धर्मत्यागोऽत्रानुष्ठेयत्वेनोक्त इति कल्पना नैव संभवति । साधारणोऽपि जनः पातकोत्पादके कर्मणि प्रवर्त्य पश्चात्ततो मोक्षसंपादनं न कुर्यात् ।

प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ।

इति न्यायात् । किमुत भगवांस्तादृशे कर्मणि प्रवर्तयेत् । अतः पातकोत्पत्तिशङ्कानिवृत्त्यर्थमेवोत्तरार्धम् । अत एव—

'अहं ते सर्वपापानि नाशयिष्यामि मा शुचः'

इति नोक्तम् । पापान्मोक्षणं तु पापानुत्पत्तिरूपं संभवति । न चैवं—

'किंचिदप्यत्र पापं ते न भविष्यति मा शुचः'

इति स्पष्टमेव कुतो नोक्तमिति वाच्यम् । सर्वपापेभ्य इति सर्वशब्देन पूर्वसंचितादपि पापान्मोक्ष इत्यर्थस्यात्र विवक्षणात् । न च पूर्वसंचितपापान्मोक्षो मोक्षदशायामेवेति कथं तस्यात्र विवक्षा स्यादिति वाच्यम् ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ( १८ । ६५ )

इति पूर्वश्लोके मामेवैष्यसीत्यनेन मोक्षावस्थायाः प्रतिपादनात् । न च युद्धारम्भे कः प्रसङ्गो मोक्षावस्थाप्रतिपादनस्येति वाच्यम् । युद्धारम्भसमये युद्धे प्रवृत्तिसंपादनार्थं यादृश्यर्जुनस्य मतिरवश्यमुत्पादयितव्या तादृश्यैव मत्या परिणामे तस्य मोक्ष आनुषङ्गिकतयैव सिद्धोऽभूदिति मोक्षावस्था प्रदर्शिता भगवता । यदि चार्जुनस्य युद्धारम्भे शोको न जातः स्यात्प्रतिबन्धाभावेन युद्धे प्रवृत्तिश्चाप्रतिहता स्यात्तदा युद्धसमाप्त्यनन्तरं मोक्षसाधनीभूतात्मज्ञानसंपादनायावश्यं यदा कदाऽपि प्रयत्नो भगवतः कर्तव्यः स्यात् । यतोऽर्जुनो भगवतोऽतीव प्रियः । तदुक्तम् 'इष्टोऽसि मे' ( १८ । ६४ ) प्रियोऽसि मे ( १८ । ६५ ) भक्तोऽसि मे सखा च ( ४ । ३ ) इति । तथा चाग्रे यदा कदाऽपि यदवश्यं कर्तव्यं तत्तदानीं शोकनिवारणप्रसङ्गेन साहजिकतयैव सिद्धप्रायमभूदिति मुदा तत्परवशस्तथोक्तवान् । तदेतत् 'वराटिकान्वेषणाय प्रवृत्त-

श्चिन्तामणिं लब्धवान् ' इति न्यायानुगुणमभूत् । एतेनार्जुनं निमित्तीकृत्य सर्वलोकानुग्रहार्थं भगवता गीताशास्त्रं प्रोक्तम्, इत्यपास्तम् । ' तादृशप्रसङ्गानुगुणमर्जुनस्य यदवश्यवक्तव्यमित्युक्तं भगवता तदेव गीताशास्त्रं सत्सर्वलोकानुग्रहार्थमभूत् ' इति हि वस्तुस्थितिः ।

अत्रापरे प्रत्यवतिष्ठन्ते । सर्वधर्मान्परित्यज्येत्यत्र यो धर्माणां परित्याग उक्तः स स्वरूपत एव यथाऽत्र ग्रहीतुं शक्येत तथाऽयं श्लोको व्याख्येयो भवति । तथा हि–सर्वधर्मानित्यत्र के सर्वे धर्मा इत्यपेक्षायां पूर्वश्लोके ये व्यावर्तितास्त एवात्रोपतिष्ठन्ते । तेषां च धर्माणां परित्यागः पूर्वश्लोक आर्थः। अत्र शाब्द इति विशेषः । अयं हि पूर्वः श्लोकः–

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यासि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ( १८ । ६५ )

अत्र मन्मना भवेति नापूर्वो विधिः । न ह्यर्जुनस्य मनोवृत्तौ कदाऽपि भगवान्न प्रविशतीति युज्यते वक्तुम् । तथा मद्भक्तो भवेत्यपि नापूर्वो विधिः । स च मद्भक्तः सन् मन्मना भवेत्येवं मन्मना भवेत्यस्याऽऽनुषङ्गिकतयाऽस्तु भवेत्यस्याऽऽवृत्त्या वाक्यान्तरकल्पनया मद्भक्तो भवेत्येवं स्वातन्त्र्येण वाऽस्तु, उभयथाऽपि नापूर्वः । भक्तोऽसि मे सखा चेति ( ४।३ ) इति भगवतैव भक्तत्वस्यानूदितत्वेन तस्य सिद्धत्वात् । तथा मद्याजी भव, मां नमस्कुरु, इत्यपि नापूर्वो विधिः। शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्(२।७)इत्युक्तवताऽर्जुनेन भगवति पूज्यत्वस्य नमस्कार्यत्वस्य च गृहीतत्वात् । तदेवं विधिद्वयमस्तु विधिचतुष्टयं वा सर्वथाऽपि नापूर्वो विधिरपि तु नियमः । नियमविध्यङ्गीकारे च यथा प्रकृत्यैव समप्रदेशे यष्टुं प्रवृत्तस्य समे यजेतेति वचनमुदास्ते केवलं विषमप्रदेशे यष्टुं प्रवृत्तस्य ततो निवृत्तिमात्रं करोति । समेऽपि प्रदेशे यष्टुं प्रवृत्तिश्च स्वर्गकामो यजेतेत्यादिवचनान्तरसाध्यैव न तु समे यजेतेति वचनसाध्या । तथा प्रकृतेऽर्जुनस्य मनोवृत्तौ भक्तौ पूज्यत्वबुद्धौ नमस्कार्यत्वबुद्धौ च यदा यदृच्छयैव भगवान् विषयस्तदा मन्मना भवेत्यादिनियमविधेर्न कश्चिद्व्यापारः । यदि च तासु भगवद्व्यतिरिक्तः कश्चन विषयः प्रविशेच्चदा ततो निवृत्तिमात्रमेतद्वचनसाध्यम् । सा च निवृत्तिर्न शाब्दी । मद्भिन्नमना मा भूरित्यादिवचनस्याकरणभावात् । किंत्वार्थी । सैव च निवृत्तिः सर्वधर्मान् परित्यज्येत्यनेन शब्दतः क्रियते । ननु समप्रदेशे यष्टुं प्रवृत्तिर्न समे यजेतेति वचनसाध्या वचनस्य निय-

र्तकस्य प्रवर्तकत्वाङ्गीकारेऽतिभारप्रसङ्गात् । तथा च यथा तत्र स्वर्गकामो यजेतेति वचनान्तरं प्रवर्तकं तथा प्रकृते किं प्रवर्तकमिति चेत्तत्राऽऽह—मामेकं शरणं व्रजेति । ननु समे यजेतेति वचनस्य केवलं विषमप्रदेशान्निवृत्तिमात्रपरत्वे प्रवर्तकस्य स्वर्गकामो यजेतेत्यादिवचनान्तरस्यापेक्षा युज्यते । अदृष्टफलके कर्मणि निसर्गतः प्रवृत्त्यभावात् । अत्र तु मन्मना भवेत्यस्य केवलं निवर्तकत्वेऽपि निर्वृत्तिकस्य मनसोऽवस्थित्यभावेन तत्र वृत्तौ च मन्मना भवेत्यादिभिर्विषयान्तरनिवृत्तौ भगवानेक एव विषयस्तत्रावशिष्ट इति तं गृह्णीयादेवेति न प्रवर्तकस्य मामेकं शरणं व्रजेत्यस्य वचनान्तरस्यापेक्षा युज्यत इति चेन्न। यद्यप्यर्जुनस्य मनोवृत्त्यादिषु भगवानेक एव विषयोऽवशिष्टस्तथाऽपि तासु भगवतः प्रवेशः शरण्यत्वेनैव स्यादिति वक्तुमशक्यम्। अतः शरण्यत्वेनैव प्रवेशाय मामेकं शरणं व्रजेत्युक्तम्। एवं च पूर्वश्लोके भवेत्यादिनाऽर्थतः, मन्मना अत्र च श्लोके सर्वधर्मान् परित्यज्येत्यनेन शब्दतो भगवद्व्यतिरिक्तविषयस्य मननभक्तिपूजानमस्कारादिधर्माः स्वरूपतो व्यावर्तिताः। भगवदर्पणबुद्ध्या क्रियमाणास्तु न व्यावर्तिता भवन्ति। अतो धर्मपरित्यागजन्यपातकस्यासंभव एवेति पूर्ववदेव युद्धे भाविस्वजनवधनिमित्तेनैव संभावितं पातकं मनसि कृत्याहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्युत्तरार्धं उक्तमिति ।

अथ मोक्षयिष्यामीत्यत्र णिच्प्रत्ययार्थः प्रयोजकव्यापारः कीदृश इति तदुच्यते । सर्वपापान्मोक्षश्च तदधिगमाद्भवतीति ' तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ' ( ब्र. सू. ४ । ४ ) इति सूत्रे प्रतिपादितम् । तस्य परमात्मनोऽधिगमस्तदधिगमः । अधिगमः प्राप्तिर्ज्ञानं च ।

साकं रामेण मिथिलामधिगच्छति गाधिजः ।

इति शास्त्रार्थमधिगच्छतीति च दर्शनात् । प्रकृते चार्थद्वयमप्येकरूपमेव । परमात्मप्राप्तेर्ज्ञानरूपत्वात् । न हि व्यापकस्य परमात्मन आकाशस्येव क्वापि कदाऽपि चाप्राप्तिः संभवति । अतः परमात्मविषयकमज्ञानं तदप्राप्तिशब्देन परमात्मज्ञानं च तत्प्राप्तिशब्देन व्यपदिश्यते । तथा च परमात्मप्राप्त्या सर्वपापान्मोक्ष इति सिद्धम् । परमात्मप्राप्तिसाधनं च बुद्धियोगविशेषः ।

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ( १० । १० )

इत्युक्तेः । एवं च मोक्षयिष्यामीत्यत्र पापान्मोक्षप्रयोजकीभूतो व्यापारो भगवन्निष्ठस्तादृशबुद्धियोगप्रदानरूप इति सिद्धम् । तादृशबुद्धियोगः परमात्म-

मार्तिद्वारा सर्वपापान्मोक्षं साधयति । बुद्धियोगप्रदानं च शरणागतस्य परमात्मा करोत्येवेत्यतः पूर्वार्धे ' मामेकं शरणं व्रज ' इत्युक्तम् ।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ( ९।३२ )

इत्यत्रापि व्यपाश्रित्येत्युक्तो व्यपाश्रयश्चानन्यभावेन शरणागतिरेव। वीत्युपसर्गबोधितो विशेषश्च शरणागतिरूपः । अपेत्यनेन तत्रानन्यभावो बोध्यते । परगतिप्राप्तिश्च मोक्ष एव । साऽपि च बुद्धियोगप्रदानद्वारैवेत्येकवाक्यतैव ।

ननु चात्र व्यपाश्रित्येति ल्यबन्तस्य क्वान्वयः । पापयोनयः स्युरित्यत्र परां गतिं यान्तीत्यत्र वा । नाऽऽद्यः । असंभवात् । नहि परमात्माश्रयेण पापयोनौ जन्म भवतीत्युपपद्यते । नान्त्यः । दूरान्वयप्रसङ्गात् । ' येऽपि पापयोनयः स्त्रियो वैश्याः शूद्राश्च स्युः ' इत्येवं यच्छब्दघटितेन वाक्येन व्यवधानादिति चेत्–उच्यते । व्यपाश्रित्येत्यस्य स्युरित्यत्रान्वयः । पापयोनय इति शुद्देश्यघटकम् । स्त्रियो वैश्याः शूद्रा वा येऽपि पापयोनयो मां व्यपाश्रित्य स्युस्तेऽपि परां गतिं यान्तीत्यन्वयः । सत्ताक्रियायाः कालपरिच्छेदस्त्वौपाधिकः ।

स्वीयं संरक्ष्यायमास्ते कुमारोऽपि कुशाग्रधीः ।

इति यथा । तत्र हि सांप्रतिकी या सत्ता तदपेक्षया पूर्वकालिकत्वं संरक्षणक्रियाया इति क्त्वाप्रत्ययोपपत्तिः । संरक्ष्याऽऽस्त इत्यस्य संरक्षतीत्यर्थः । तथा प्रकृते स्युरित्यत्रासुधातुवाच्या संभाविनी या सत्ता तदपेक्षया पूर्वकालिकत्वं व्यपाश्रयक्रियाया इति क्त्वाप्रत्ययोपपत्तिः । व्यपाश्रित्य स्युरित्यस्य व्यपाश्रयेयुरित्यर्थः ।

ननु चात्र प्रथमतृतीयपादयोर्व्यत्यासेन–

स्त्रियो वैश्यास्तथा शूद्रा येऽपि स्युः पापयोनयः ।
मां हि पार्थ व्यपाश्रित्य तेऽपि यान्ति परां गतिम् ॥

इति पाठः कुतो न कृतः । तथा पाठे हि व्यपाश्रित्येत्यस्य क्वान्वय इति शङ्काऽपि नोदेतीत्यपरं लाघवमिति चेत्–उच्यते । व्यत्ययेन पाठे यद्यपि लाघवं तथाऽपि परमात्माश्रितत्वस्योद्देश्यकोटौ निवेशो न स्यात् । उद्देश्यबोधकं वाक्यं हि यच्छब्दघटितं 'येऽपि पापयोनयः स्युः ' इत्येव । स्वादृश्च तत्र निदर्शनम् । न चोद्देश्यकोटौ परमात्माश्रितत्वस्य निवेशाभावे किं स्यादिति

वाच्यम् । तथा सत्युद्देश्यतावच्छेदकस्य विधेयतावच्छेदकव्याप्यत्वानियमस्यौत्सर्गिकत्वात्सर्वेषां पापयोनीनां मुक्तिरावश्यिकी स्यात् । ननु भवतु सर्वेषां मुक्तिः कस्ते द्वेषः । मतः सर्वेषामपि परमात्माश्रयेणैव स्याद्विधेयकोटौ मां व्यपाश्रित्येत्यस्य प्रवेशादिति चेत्सत्यम् । न मे कश्चन द्वेषः प्रत्युत सर्वेषां मुक्तिरिष्टैव मे । किंतु सांप्रतं तथा न दृश्यते। यतः पापयोनयः सांप्रतं दृश्यन्ते जगति। तैः परमात्माश्रयो न कृत इति चेत्कुतो न जातस्तेषां स परमात्माश्रयः । एवं च परमात्माश्रयः सर्वेषां न दृश्यत इति तदनुसारेणात्रोद्देश्यकोटौ 'येऽपि पापयोनयः परमात्माश्रिताः स्युः' इत्येवं परमात्माश्रयस्य प्रवेश आवश्यकः । स च यथान्यासे सत्येव सिध्यतीति नैव विपर्यासेन पाठोऽप्यवकाशं लभत इति बोध्यम् ।

'नन्वत्र सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति विध्यनन्तरं सद्य एव प्रत्युत्तरावकाशमप्यदत्त्वैवाहं त्वा सर्वपापेभ्यो मोक्षयिष्यामीत्युक्तिर्मा शुच इति समाश्वासनं च नोचितमिव प्रतिभाति । विध्यनुसारेणायं वर्तेतैवेति निश्चयानन्तरं ह्येतादृशयुक्तिरुचिता । अत्र तु विधिश्रवणानन्तरं तथा करिष्यामीति प्रतिश्रवणमपि नास्ति दूरे निश्चयः । तथा मन्मना भवेति पूर्वश्लोकेऽपि मन्मना भवेत्यादिविध्यनन्तरं सद्य एव मामेवैष्यसीति फलोक्तिः, स्वोक्तेः सत्यत्वकथनं, तत्र प्रियत्वहेतुश्च नोचितः । तथा च कथमेतदिति चेत्–उच्यते । मदाज्ञानुसारेणायं वर्तेतैवेति निश्चयोऽत्र भगवतो मनसि विधितोऽपि पूर्वमेवाऽऽसीत् । मन्मना भवेत्यादिविधयोऽप्यत्र विधिच्छायापन्नाः सिद्धार्थस्यैवानुवादकाः । पूर्वमेकादशाध्याये विश्वरूपदर्शनानन्तरं 'स्थाने हृषीकेश० (११।३६) इत्याद्यर्जुनोक्त्यैवतत्सिध्यति । निदर्शनार्थं तत्रत्यमुपसंहारात्मकं तस्मात्प्रणम्येति श्लोकमुपपादयामि–

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥

तस्मात् सखेति मत्वा प्रसभं यदुक्तम् (११।४१) यच्चावहासार्थमसत्कृतोऽसि (११।४२) इत्येवं मया लोकत्रयेऽप्यप्रतिमप्रभावस्य तवापराधाः कृतास्तस्माद् अहमत्यन्तापकृष्टोऽहमीशमीशनशीलमीड्यं स्तुत्यं च त्वां प्रणम्य कायं प्रणिधाय नीचैः कृत्वा त्वां प्रसादये तव यथा मद्विषये प्रसन्नता स्यात्तथा प्रार्थये ।

प्रार्थनाप्रकारमेवाऽऽहोत्तरार्धेन–पितेवेत्यादि । यथा पुत्रस्यापराधं पिता सहते यथा च मित्रस्यापराधं मित्रं सहते यथा च प्रियाया अपराधं प्रियः सहते तथा हे देव ममापराधं सोढुमर्हसीत्यर्थः । अत्रार्जुनेन कृतामीदृशीं प्रार्थनां श्रुत्वा भगवत इत्थं मतिः स्यादेव यदयं मद्विचाराद्बहिर्लेशतोऽपि न वर्ततेति।

अथात्र प्रसङ्गात्किंचिद्विचार्यते । नन्वत्र पूर्वार्धेऽर्जुनेन प्रणामकायप्रणिधानादिकं स्वकीयमाचरणं स्वोक्त्यैव यदाविष्कृतं तन्न युक्तम् । नह्यर्जुनसदृशः प्रेक्षावान् स्वकीयमनवद्यमाचरणं स्वमुखेनैवोद्गिरति । किंतु

'ततः प्रणम्य प्रणिधाय कायं प्रसादितस्तेन स ईश ईड्यः'

इत्येवं कव्युक्तित्वेन तादृशार्थस्यात्र निबन्धनमुचितम् ।

एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः (१।४७) ।

इतिवत् । नतु तत्र तादृशोऽर्थः ।

'अधुनोपविशाम्येव रथोपस्थेऽत्र केवलम् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ।

इत्येवमर्जुनोक्त्योपनिबद्ध इति चेत्–सत्यम् । यद्यप्येवं तथाऽपि तदानीमर्जुनोऽत्यन्तापराधिनमात्मानं मन्यमानो विषादातिशयग्रस्तो विवेकशिथिलस्तथा स्वयमुक्तवान् । सांप्रतमपि लोके कश्चिद्दारिद्र्यातिशयपीडितः क्षुधार्तः कचिद्गृहद्वार्यवस्थितोऽन्नं याचमानस्तथा ( तुमच्या पाया पडतो ) विलपन् दृश्यते । तेन च गृहे निवसता मानसं दयार्द्रता नीयते । प्रकृतेऽपि च भगवतो मानसं दयार्द्रतां निनीषन्नेवार्जुन ईदृशं वक्तुं प्रवृत्तः । भगवतो मानसं प्रकृत्यैव दयार्द्रमिति त्वन्यत् । एवं चात्र स्वोक्त्यैव स्वीयाचरणाविष्करणेनार्जुनस्य विषादस्य निरवधिरतिरेकः सूचितो भवतीति गुणावहैवात्र स्वोक्त्याऽऽविष्कृतिः । पूर्वं भीष्मद्रोणादीन् दृष्ट्वा कथमेभि. सह युद्धं कार्यमित्येवं मायामोहितस्यार्जुनस्य यो विषादोऽभूत्स विषादो विराट्स्वरूपावलोकनानन्तरकालिकविषादवन्न परमावधिं गत इति तदानींतनाचरणस्य न स्वोक्त्याऽऽविष्करणं किंतु ' एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थे० ' इत्येवं कव्युक्तित्वेनोपनिबन्धनमिति भेदः । युक्तश्च विराट्स्वरूपावलोकनेनार्जुनस्य मनसि समुत्पन्नस्य विषादस्य परमावधिरतिरेकः । तथा हि–भगवतो विराट्स्वरूपमदृष्टपूर्वं दृष्टवतोऽर्जुनस्य मनोवृत्तिरानन्दात्मिका विस्मयात्मिका भयात्मिका चाभूत् । तदानीमानन्दविस्मयभयानामतिरेकश्च तथाविधोऽभूद्यथा स तदानीं जीवन्नपि मृतवदेव मनोवृत्तिशून्य इवाभूत् ।

इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ( ११ । ५१ )

इत्यग्रे पूर्ववत्सौम्यं भगवत्स्वरूपं दृष्टवतोऽर्जुनस्योक्तेः । तत्राऽऽनन्दो हृषितोऽस्मीति ( ११ । ४५ ) हृषितपदेन, विस्मयश्च विस्मयाविष्टः ( ११।१४ ) इत्यनेन, भयं च भीतभीतः ( ११ । ३५ ) भयेन च प्रव्यथितम् ( ११ । ४५ ) इत्यनेनेत्येवं स्पष्टमेव प्रदर्शितानि विराट्स्वरूपावलोकनवेलायामानन्दविस्मयभयानि । तदनन्तरं च पूर्ववत्सौम्यस्वरूपावलोकनकाले भगवतो दिव्यं स्वरूपं स्मरतः क्व तन्महामहिमशालि मनसाऽप्यचिन्त्यं भगवतो दिव्यं रूपं क्व चाहं कीट इव क्षुद्रतरः । मेरुसर्षपयोरिव महदेतदन्तरम् । तथाऽपि ताहृशेन भगवता सह मित्रस्येव मे आह्वानावहासादिकोऽत्यन्तानुचितो व्यवहार आसीदिति चिन्तयतश्च विषादः । यच्च तद्भगवतो दिव्यं रूपमर्जुनस्य मनस्यानन्दविस्मयभयानां परमावधिमतिरेकमजनयत्तद्विषादस्याप्यतिरेकं परमावधिं जनयेदेवेति युक्तमुत्पश्यामः । अत एव च ' सखेति मत्वा० ' ( ११।४१ ) यच्चावहासार्थमसत्कृतोऽसि० तत्क्षामये ( ११ । ४२ ) इत्येवं स्वापराधोक्तिपूर्वकं क्षमा प्रार्थिता । तथा तस्मात्प्रणम्य० अर्हसि देव सोढुम् ( ११।४४ ) इत्येवं प्रकृतश्लोकेऽपि प्रणामकायप्रणिधान( लोटांगण घालणे )प्रभृतिस्वकीयाचरणोक्तिपूर्वकं क्षमा प्रार्थितेति बोध्यम् । अत्र च किं सोढुमर्हसीत्येवं सहनक्रियायाः कर्माकाङ्क्षायां तत्क्षामये ( ११ । ४२ ) इत्यत्र तच्छब्देन गृहीतमपराधजातमत्र संबध्यते । सहनक्रियाकर्मत्वेनैव तत्र तस्य निर्देशात् । अत्रापराधश्च भगवदननुगुणमर्जुनाचरणम् । तत्सहनं चापराधकार्यानुत्पादनम् । अपराधकार्यं चापराधिमत्यपकारचिन्तनं प्रेमह्रासश्च । एतदपराधकार्यं चापराधज्ञानद्वारा बोध्यम् । तथा च मदीयापराधजातं क्षमस्वेत्येवमत्रार्जुनेन भगवान्प्रार्थ्यत इति सिद्धम् । तत्र दृष्टान्तमाह—पितेव पुत्रस्येति । नन्वत्र कीदृशावस्थः पुत्रो ग्राह्यः । यतः पुत्रसंबन्धेन पितुराचरणस्यावस्थात्रयं दृश्यते—

लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् ।
प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत् ॥ इति ।

ततश्चात्र पुत्रपदेन किं लालनावस्थो ग्राह्य उत ताडनावस्थोऽथवा मित्रसदृशावस्थ इति संशयः । नाऽऽद्यः । पित्रा स्वाङ्के गृहीतो बालो यद्यप्यत्ताप्रहारादिकं करोति तदनुचितमपि तदा बालस्तदनुचितमिति न मन्यते । पिताऽपि तथा न मन्यते । प्रत्युत तादृशावस्थस्य बालस्य हस्तपादचालन-

पूर्वार्धे आविष्कृतवानिति पूर्वमुक्तमेव । तथैव विषादातिरेकग्रस्तमना आत्मानमत्यन्तापराधिनं मन्यमानो भगवन्तं प्रार्थयितुं प्रवृत्तः कदा भगवत्प्रसादं लभेयमिति संभ्रान्ततरत्वरया वक्तुं प्रवृत्त इति तदुक्तौ ' प्रियः प्रियायाः इव ' इत्यत्रत्य इवशब्दो गलितः । पदच्युतिरियं त्वराद्योतिकेति गुण एव । एवमेवार्हसीत्यत्राऽऽद्यो ऽकारः, हे प्रसीदेति ( ११। ४४ ) इत्यत्रेतिशब्दावयव आद्य इकारश्च मनःसंभ्रमेण गलित इति तादृश्यक्षरच्युतिरपि त्वराद्योतिकेति गुण एव । ईदृशस्थले पदशब्दानुच्चारणेऽपि तदर्थलाभः सुलभ एव । वर्णानुच्चारणं हि द्विविधम् । उच्चारणानुगुणव्यापारवैचित्र्यात् । वर्णोच्चारणस्य हीत्थं प्रक्रिया । किंचिद्वक्तुं प्रवृत्तस्य मनुष्यस्य मनसा समाहतः कायाग्निर्मारुतमूर्ध्वं प्रेरयति । स ऊर्ध्वं प्रेरितो वायुर्जिह्वाग्रोपाग्रादीनां कण्ठताल्वादिस्थानैः सह तत्तद्वर्णोच्चारणानुगुणसंयोगविशेषजनकं व्यापारविशेषं प्रतिक्षणमन्यमन्यं जनयति । ते च व्यापारविशेषाः क्रमशो जायमानाः स्वस्वानुगुणान्वर्णान्क्रमशोऽभिव्यञ्जयन्ति । एवं स्थिते यत्र वक्तुर्मनसि कस्यचिच्छब्दस्यानुच्चारणबुद्धिरेव भवति तत्र तादृशेन मनसा समाहतेन कायाग्निनोर्ध्वं प्रेरितो वायुस्तादृशशब्दघटकवर्णोच्चारणानुगुणाञ्जिह्वादिव्यापारान्नैव जनयति । अयमेकोऽनुच्चारणप्रकारः । यत्र तु न तथोद्दिष्टं किंतु केवलं संभ्रान्तमनास्त्वरया वक्तुं प्रयतते तत्र स ऊर्ध्वप्रेरितो वायुस्त्वरान्वित एकस्मिन्नेव क्षणेऽनेकवर्णानुगुणाननेकान्व्यापारविशेषान्क्रमशोऽपि युगपदिव जनयितुं प्रयतते । तत्र केचिद्व्यापारा अलब्धावकाशाः स्वानुगुणान्वर्णान्व्यञ्जयितुं न प्रभवन्ति । अयं हि द्वितीयोऽनुच्चारणप्रकारः । अत्राऽऽद्ये वर्णानुच्चारणं क्रियते द्वितीये तु वर्णानुच्चारणं जायत इति विशेषः । अयं चात्रापरो विशेषः । श्रोतुः प्रथमतः शब्दज्ञानं ततस्तदर्थस्मरणं ततो वाक्यार्थावबोधो जायते । तत्राऽऽद्ये प्रकारे श्रोतुरनुच्चारितशब्दार्थज्ञानं वाक्यार्थावबोधकाले जायते तत्तदध्याहारलभ्यम् । द्वितीये तु प्रकारे श्रोतुः शब्दश्रवणसमकालमेवानुच्चारितशब्दस्फुरणम् । तच्चाध्याहारप्रयासमन्तरेणैव निसर्गत एव जायते । तथा हि । तादृशशब्दोच्चारणजनकव्यापारस्य व्यापारान्तरसंमर्देन तज्जन्योच्चारणस्य स्पष्टत्वाभावेऽपि तस्य सूक्ष्ममुच्चारणं जायत एव । तादृशसूक्ष्मोच्चारितशब्दोपरक्तपूर्वपरशब्दश्रवणादुत्कृष्टवैशिष्ट्याच्च श्रोतुर्मनसि सूक्ष्मोच्चारितस्यापि शब्दस्य स्फुरणं भवति । किंचाऽऽद्यः प्रकारोऽर्थपरत्वेन संभवति । द्वितीयस्तु प्रकारोऽर्थपरि

चानर्थके चैकस्मिन्वर्णे वर्णसमुदाये वा संभवति । तथा चात्र ' प्रियः प्रियाया इवार्हसि देव सोढुम् ' इत्यत्राक्षरद्वयात्मकस्यानर्थकस्य ' इवा ' इति भागस्य पूर्वोक्तप्रकारेण त्वरावशात्स्पष्टमनुच्चारणं संभवतीति ' इव ' शब्दस्यार्हतीत्यत्राकारस्य चेति च्युतिद्वयं न कल्पनीयं भवति । ननु च्युतिद्वयकल्पने वैकच्युतिकल्पने वोभयथाऽपि ' र्हसि ' इत्यस्यासाधुत्वं स्यात् । अकारलोपस्य शास्त्रीयत्वाभावादिति चेन्मैवम् । अनुकार्यस्यानर्थकस्यासाधुत्वेऽप्यनुकरणस्यासाधुत्वाभावात् । अनुकरणं ह्यनुकार्येणैवार्थवद्भवति । एवं च्युतिप्रकल्पनयोपमा सिध्यति । च्युत्यकल्पने त्विवशब्दाध्याहारेणोपमोपपादनीया । आवश्यकी चेयं प्रियः प्रियाया इवेत्युपमेति प्रागुपपादितमेव । अध्याहारपक्षे प्रियायार्हसीति संधिरार्षः । उपपत्तिस्तु तस्याऽऽतिदेशिकमनित्यमिति पूर्वत्रासिद्धम् ( पा० सू० ८ । २ । १ ) इत्यतिदेशस्यानित्यत्वेन यलोपस्य सिद्धत्वात्सवर्णदीर्घः सुलभ इति । इयं च रीतिरत्राकारच्युतिपक्षेऽप्यवश्यं शरणीकरणीयैव । अन्यथाऽत्रैव प्रिय इति पदे प्रियाया इति पदे च रुत्वस्यासिद्धत्वाद्रोरुकारस्येत्संज्ञालोपयोरभावप्रसङ्ग इति स्पष्टमेव व्याकरणदर्शने । एतेनात्र ' प्रियाय ' इति पदच्छेदं प्रकल्पयन्तः परास्ताः । अयं हि तेषामाशयः । अत्र चतुर्थ्यन्तः प्रियशब्दो निर्दिश्यते न तु षष्ठ्यन्तः प्रियाशब्दः । उपमाद्वयमेवात्र । प्रियः प्रियायेति पदद्वयं दार्ष्टान्तिकार्थसंबद्धम् । प्रियायेति षष्ठ्यर्थे चतुर्थी । यथा पुत्रस्यापराधं पिता सहते यथा वा सख्युरपराधं सखा सहते तथा हे देव प्रियस्त्वं प्रियस्य ममापराधं सोढुमर्हसीत्यर्थः । अत्र च नेवशब्दाध्याहारक्लेशो नापि संधेरार्षत्वकल्पनं नापि च शान्तरसप्रधानेऽत्र गीताशास्त्रे ' प्रियः प्रियायाः ' इति शृङ्गाररसानुगुणोवर्णनमनुचितमिति दोष इति ।

वयं तु पश्यामः किमत्राऽऽनुगुण्य तैः संपादितमिति । यदुक्तमिवशब्दाध्याहारक्लेशो नेति । न तद्युक्तम् । इवशब्दच्युतौ स्वीकृतायामध्याहारस्यैवाभावात् । अध्याहारपक्षेऽप्यत्र क्लेशो नास्त्येव । तदुक्तमध्याहारतत्त्वज्ञैः—

> अध्याहारस्तु तत्रैव दोषावहं उदीरितः ।
> तदर्थस्य विवक्षाऽस्ति न वेति यदि संशयः ॥
> संशये हि विलम्बेन वाक्यार्थावगतिर्यतः ।
> विवक्षा निश्चिता स्याच्चेदध्याहारो न दुष्यति ॥
> यतस्तत्राविलम्बेन जायते श्रोतुरर्थधीः ॥ इति ।

एतदुक्तं भवति । अध्याहारक्लेशश्च मानसः । पदार्थज्ञानोत्तरं वाक्यार्थज्ञानमिति क्रमः । तत्र वाक्यार्थज्ञानसाधनीभूते पदार्थज्ञाने यदि काचिन्न्यूनता स्यात्तर्हि तां दूरीकर्तुं याऽध्याहारकल्पनादिव्यापारान्तरासक्तिर्मनसो जायते स मानसः क्लेशः । स चाध्याहारस्थले सर्वत्रैव भवतीति न नियमः । यत्र हि पदार्थज्ञानसमय एवाध्याहृतपदार्थविज्ञानं संस्कारविशेषाद्भवति तत्र न क्लेशः । संस्कारविशेषश्च पूर्वोपक्रान्तार्थज्ञानात्परिस्थित्यवलोकनाद्वा जायते । लोके हि क्वचिद्गवाक्षद्वारा वहन्तं वायुमसहमानेन रोगिणा द्वारमित्युक्ते सद्य एव तादृशपरिस्थितिज्ञस्य श्रोतुर्मनसि पिधेहीति पिधानक्रियास्फुरणं भवति । तदुक्तम्–

अरे द्वारमिति श्रुत्वा तद्भावमधिगच्छति ।
तादात्विकीं स्थितिं ज्ञात्वा पिधेह्युद्घाटयेति वा ॥ इति ।

प्रकृते च प्रथमान्तं षष्ठ्यन्तं चेति पदद्वयमिवशब्दसहितं ‘ पितेव पुत्रस्य ’ इति ‘ सखेव सख्युः ’ इति च द्विःप्रयुक्तमिति तच्छ्रवणजन्यसंस्काराहितमनसस्तदग्रे ‘ प्रियः प्रियायाः ’ इत्येवं प्रथमान्तं षष्ठ्यन्तं चेति पदद्वयमत्यभिज्ञया पूर्वसदृश एवार्थोऽत्रोपनिबध्यत इति जानतश्च सद्य एवैवार्थस्फुरणं युक्तमेव । तस्मादीदृशस्थले व्यापारान्तरासक्तिरूपक्लेशस्याभावेन दूषकताबीजस्याभावान्नाध्याहारस्य दुष्टत्वमिति विभावनीयं सूरिभिः । यच्च प्रियायेति चतुर्थ्यन्तपदच्छेदे संधेरार्षत्वकल्पनं नेत्यानुगुण्यं प्रदर्शितं तत्रैकं संधित्सतोऽपरं प्रच्यवत इति न्यायापातः । संधेरार्षत्वकल्पनं दूरीकुर्वतः षष्ठ्यर्थे चतुर्थ्या आर्षत्वकल्पनं गले पततीति । किंच संधेरुपपत्तिः प्राक् प्रदर्शिता । षष्ठ्यर्थे चतुर्थ्या उपपत्तये तु केवलं ‘ व्यत्ययो बहुलम् ’ (पा० सू० ३ । १ । ८५) इत्येवं बाहुलकं शरणीकरणीयम् । किंच यः संधेरुपपत्तिप्रकारः स चतुर्थ्यन्तपदच्छेदेऽपि प्रिय इति पदे त्वयाऽप्यङ्गीकर्तव्य एव । किंच बाहुलकानुसरणेऽपि यो विभक्तिव्यत्ययो दृश्यते तत्र षष्ठ्यर्थेऽन्या विभक्तिः प्रायो न दृश्यते । षष्ठ्येवान्यविभक्त्यर्थे दृश्यते । किंचात्र गीताप्रणेत्रा तथाऽत्र चतुर्थी निर्दिष्टा स्यादित्यत्र न किंचिद्धेतुं पश्यामः । न प्रियस्येति षष्ठीनिर्देशे छन्दोभङ्गः । प्रत्युतार्थावगतिसौलभ्यमेव । यच्च प्रियाया इति षष्ठ्यन्तपदच्छेदे शान्तरसप्रधानेऽस्मिन्गीताशास्त्रे शृङ्गाररसानुगुणवर्णनमनुचितमिति दोषप्रदर्शनं कृतं तत्प्रागेव दत्तोत्तरम् ।

प्रकृतमनुसरामः । या चेयं कायपरिशुद्धिरुक्ता सा त्रिविधस्यापि कायस्य सर्वांशेन चापेक्ष्यते । कायत्रैविध्यं च स्थूलसूक्ष्मकारणभेदेन पूर्वं प्रदर्शितमेव । कायशुद्धिश्चेत्तत्र मोक्षः करतलामलकवदनायाससाध्य एवेति मन्तव्यम् । तदुक्तम्—

यावदशुद्धः कायस्तावद्दुर्वार एव भवबन्धः ।
शुद्धौ संवृत्तायां मुक्तेः किं साधनैरन्यैः ॥ इति ।

अत्र च कायशुद्धेः प्रशंसायां तात्पर्यं न तु मोक्षसाधनीभूतस्याऽऽत्मविज्ञानस्याधिक्षेपे । नहि निन्देति न्यायात् । कायशुद्धेरावश्यकत्वं चान्यत्राप्युक्तम्—

'विना कायशुद्धिं न धर्मार्थकामाः कथा दूर एवापवर्गस्य नित्यम्' इति । त्रिविधेषु च स्थूलादिषु देहेषु यः सर्वापेक्षयाऽप्यत्यन्तसूक्ष्मतरः कारणदेहस्तस्य शुद्धिश्चेदर्थादेव तन्मूलकस्य स्थूलसूक्ष्मरूपदेहद्वयस्य शुद्धिः स्यादेव । कारणदेहश्च भावरूपाज्ञानमयः । तस्य शुद्धिश्च तद्गतदोषापसारणम् । दोषश्च तद्गतस्तद्विषयकमज्ञानम् । इदमज्ञानमित्येवमज्ञानत्वेनाज्ञानविषयकं यज्ज्ञानं तस्याभाव इति यावत् । तस्य दोषस्यापसारणं च साधनचतुष्टयसंपत्त्या भवति । अत एव गीतायामारम्भ एव 'न त्वेवाहम्' (गी० २ । १२) इत्यादिना श्लोकचतुष्टयेन साधनचतुष्टयसंपत्तिः क्रमेण प्रदर्शिता भगवता । यश्चायमर्जुनस्याज्ञानरूपकारणशरीरगताज्ञानदोषनिबर्हणाय भगवता गीतोपदेशरूपः प्रयत्नः कृतस्तत्साफल्यम्—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
इदानीं गतसंदेहः करिष्ये वचनं तव ॥ (गी० १८ । ७३)

इत्यर्जुनोक्त्या स्पष्टमेवावगम्यते । अयमर्थः—कारणशरीरं यद्भावरूपमज्ञानं तद्विषयकमर्जुनस्य यदज्ञानं तदिह मोहशब्देनोच्यते । भावरूपस्याज्ञानस्याज्ञानत्वेन याथातथ्येन यज्ज्ञानं तस्याभाव इति यावत् । तादृशज्ञानाभावादेव चायं शरीरादिकः सर्वः प्रपञ्चः सत्य इव प्रतीयते । तत एव च 'कथं भीष्ममहम्' (गी० २ । ४) इत्याद्युक्तप्रकारेणार्जुनस्य मनसि संशयः प्रादुरभूत् । यद्यपि कथं भीष्ममित्याद्यर्जुनोक्तौ संशयाकारो न दृश्यते किंतु कथमिति पदगम्य आक्षेपस्तथाऽपि प्रथमाध्यायान्ते 'एवमुक्त्वा०' (गी० १ । ४७) यथा शस्त्रन्यासपर्यवसायिनी निश्चिता मतिरभूत्तथा 'कृतस्वा

कश्मलमिदम् ' ( गी० २ । १ ) इति भगवद्वचसा शिथिलाऽभूदित्येवं संशयस्तत्र पर्यवस्यति । ननु पूर्वं याऽर्जुनस्य निश्चिता मतिरासीत्तस्याः शैथिल्यमेव कुतस्त्वा कश्मलमित्यादिभगवद्वचसा जातमिति न संभवति । किंतु तादृशमतेर्भगवद्वचसा विपर्यास एव भाव्य इति चेत्–सत्यम् । येन संस्कारेण भीष्मादिदेहे स्वीयत्वभावना जायते स संस्कारः कुतस्त्वा कश्मलमित्येतावन्मात्रादुपपत्तिरहितान्न नष्टो भवति । अतश्चायथार्थत्वेनागृहीतं भीष्मादिदेहविषयकं स्वीयत्वप्रत्यक्षं भगवद्वचसा जायमानं शाब्दं ज्ञानं च समबलमभूदिति संशये तस्य पर्यवसानं जायते । यथा नेत्रगतेन केनचिद्दोषेण रज्ज्वां सर्प इति भ्रान्तस्य नायं सर्प इत्याप्तवचः शृण्वतोऽपि यावन्नेत्रदोषं सर्पप्रत्यक्षं भवति। पश्चाच्च तेनाऽऽप्तेनाञ्जनादिना नेत्रदोषेऽनपसारितेऽपि ' नायं सर्पो यतो न चलति पूर्वं त्वयैवेयं प्रक्षिप्ता तत्र रज्जू रज्जुग्रन्थिश्च मध्ये दृश्यत इत्यादिरीत्या रज्ज्ववृत्तीनां सर्पवृत्तीनां चलनादीनां धर्माणां तत्राभावं तथा सर्पावृत्तीनां रज्जुवृत्तीनां ग्रन्थिविशेषादीनां धर्माणां तत्र भावं चानुभावयता पुनः पश्येत्युक्ते सर्पं पश्यन्नपि रज्जुभावनया पश्यन्पूर्ववन्न पश्यति निश्चितमतिर्न बिभेति च । तथैव तदानीं गीतोपदेशानन्तरमर्जुनस्य स्थितिरभूत् । तत्र हि भीष्मादिशरीरेष्वनित्यावृत्तीनामात्मवृत्तीनां नित्यत्वादिधर्माणां तत्राभावं तद्विपर्ययेण च नित्यावृत्तीनामनित्यत्वादिधर्माणां तत्र भावं चानुभावयता भगवताऽनेकैर्दृष्टान्तैर्युक्तिप्रयुक्तिभिश्च बोधितोऽर्जुनस्तादृग्भावनया यावत्पुनर्भीष्मादिदेहान्पश्यति तावन्न तत्र पूर्ववत्स्वीयत्वबुद्धिरासीत् । स्वदेहेऽप्यात्मीयत्वबुद्धिर्विलयं गता । तत्र कथं तस्याऽऽत्मीयत्वबुद्धिर्भीष्मादिदेहे स्यात् । अत एवार्जुनेन तदानीं नष्टो मोह इत्युक्तम् । यथा च लोके भ्रान्तस्य चक्षुषि दोषापसारणायाञ्जनं प्रक्षेप्यं भवति तथाऽत्र

' उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ' ( गी० ४ । ३४ )

इत्युक्तो ज्ञानिकृतोपदेश इत्यन्यत् । किंतु तादृशोपदेशात्पूर्वमर्जुनस्योपदेशाधिकारसिद्धिर्जातेति सूचितं भगवता । ननु यदि पश्चाद्भावी ज्ञानिकृतोऽर्जुनस्याऽऽत्मोपदेशोऽञ्जनस्थानापन्नस्ततो यथाऽञ्जनप्रक्षेपे सपद्येव रज्ज्वां सर्पो न दृश्यते तथाऽत्राऽऽत्मोपदेशे ज्ञानिभिः कृते सति सद्य एवायं प्रपञ्चो न दृश्येत । दृश्यते तु मरणपर्यन्तं सः । तत्कथमेतदुपपद्यत इति चेदत्र केचित् । अञ्जनप्रक्षेपेऽपि तस्याञ्जनस्येन्द्रियसंसर्गद्वारा दोषापसारणपर्यन्तं क्षणं क्षणार्धं

षा यावान् कालस्तावत्सर्पदर्शनमवश्यं भाव्येव । तद्वदत्रापि पूर्वजातसंस्कारेण प्रपञ्चो दृश्यत इति। यद्यप्यात्मविज्ञानोपदेशादनन्तरं मरणपर्यन्तं कालो भूयानपि भवति तथाऽपि तत्रानादिसृष्ट्यारम्भकालमारभ्योपदेशपर्यन्तं यः कालस्तदपेक्षया स तदुत्तरं मरणपर्यन्तं कालो भूयानपि क्षणतुल्य एव भवति। इयमेव जीवन्मुक्त्यवस्था बोध्येति।

अन्ये त्वेवेत्थं समादधते—यद्यप्यञ्जनप्रक्षेपानन्तरं क्षणं क्षणार्धं वाऽवकाशः सर्पदर्शनस्य स्यात्तथाऽप्यत्र तावानपि नैवावकाशः। यथा दशमस्त्वमसीत्यादौ शाब्दज्ञानसमकालमेव दशमसाक्षात्कारस्तथैवात्र महावाक्योपदेशजायमानप्रत्यक्षज्ञानसमकालमेव प्रपञ्चनिवृत्तिः। तर्हि तदानीमेव देहादिप्रपञ्चस्य निवृत्तिर्न कुत इति चेत्—किमयं सर्वः प्रपञ्च एकस्यैवास्याज्ञानमूलकः। अपि तु सर्वेषामेव जीवानाम्। तथा च ये संसारचक्रे बद्धा जीवास्तेषां यदज्ञानं तन्मूलकस्यास्य प्रपञ्चस्यास्तित्वं दुर्वारमेव। यथा देवदत्तस्य नेत्रदोषापसारणायाञ्जनप्रक्षेपेऽपि येषामन्येषां दुष्टनेत्राणां यज्ञदत्तादीनां नेत्रेष्वञ्जनं न प्रक्षिप्तं तादृशयज्ञदत्तादिदृष्ट्या तत्र सर्पो दृश्यतैव। न तस्य निवृत्तिर्देवदत्तनेत्रेऽञ्जनप्रक्षेपेण भवति तद्वत्। ननु तत्रान्यदृष्ट्या सर्पदर्शनेऽपि यस्य नेत्रेऽञ्जनं प्रक्षिप्तं तादृशदेवदत्तदृष्ट्या तत्र सर्पो न दृश्यते। अत्र तु यस्योपदेशः कृतस्तद्दृष्ट्याऽप्ययं प्रपञ्चो विद्यत एव। तदेतत्कथमुपपद्यत इति चेद्भ्रान्तोऽसि। यस्योपदेशो जायते तस्योपदेशात्पूर्वं तद्दृष्ट्या प्रपञ्चो विद्यते प्रतीयते चेत्यास्तां नाम। प्रतीतिर्हि मनोवृत्तिः। तथा च मनस एव तादृशी प्रतीतिः। किंतु मनआत्मनोरभेदाध्यारोपेणाऽऽत्मनस्तादृशी प्रतीतिरित्युच्यते। उपदेशानन्तरं तु मनसस्तादृशी प्रतीतिर्यद्यप्यस्ति तथाऽपि सा नाऽऽत्मनः। तदानीं मनआत्मनोस्तादात्म्यारोपाभावात्। तथा च तदानीं यथा प्रपञ्चो मिथ्या तथा प्रपञ्चप्रतीतिरपि मिथ्यैवेति बोध्यम्।

इदं चात्रावधेयम्—भ्रान्तस्याऽऽप्तवचसः पूर्वमनन्तरं चेति सर्पदर्शनं द्विर्यद्भूत्तयोर्महदेवान्तरं दृश्यते। प्राथमिकदर्शने हि सर्पे सत्यत्वप्रतीतिर्भयकम्पादिकं प्रहारार्थं दण्डादिग्रहणं च जायते। द्वितीयदर्शने तु सर्पे मिथ्यात्वप्रतीतिर्भयकम्पादिकस्याभावश्च भवति। तथाऽत्र भगवत्कृतादीतोपदेशात्पूर्वमनन्तरं चेति यदर्जुनस्य द्विर्भीष्मादिदेहदर्शनमभूत्तत्र प्राथमिके दर्शने भीष्मादिदेहे सत्यत्वस्वीयत्वादिप्रतीतिर्विषादातिशयः शस्त्रन्यासश्चाभूत्। द्वितीये तु दर्शने भीष्मा-

अथ 'गीता कर्मपरा' इति पक्षस्यायमाशयः । भगवता गीतायां कर्तृत्वानुसंधानरहितं यत्कर्म प्रतिपादितं तद्यद्यपि मोक्षसाधनत्वेन न प्रतिपादितं तथाऽपि वस्तुतस्तत्साक्षान्मोक्षसाधनं भवत्येव । कर्मणैव हि संसिद्धिमास्थिता जनकादयः ( गी. ३।२० ) इति वचनादिति ।

अत्रोच्यते । कर्मणेति करणे तृतीया । कर्म च संसिद्धिमोक्षः करणम् । संसिद्धिश्च मोक्ष इति हि तेषामाशयः । किंतु तत्र कर्मपदेन कीदृशं कर्म गृह्यते । कर्म हि नित्यनैमित्तिककाम्यभेदेन त्रिविधम् । तत्र चतुर्थी विधा नास्ति । तत्र काम्यं कर्मात्र ग्रहीतुं न शक्यते । कर्म हि स्वरूपतो न किंचिदपि फलं जनयति । उत्पन्नविनष्टं तत्परम्परयैव फलदायकं भवति । तत्र मध्ये द्वारं चादृष्टं किंचित्कल्पनीयम् । तच्च श्रुतिप्रमाणेन पुण्यपापरूपं कल्प्यते । सुकृतात्स्वर्गप्राप्तिर्दुष्कृतान्नरकप्राप्तिश्च श्रुतिसिद्धा । तत्र यदि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवत् 'अमुककर्मणा मोक्षकामो यजेत, उपासीत' इत्येतादृशं किंचिद्वाक्यं श्रुतौ दृष्टं स्यात्तर्हि तादृशश्रुतिबलात्तत्रापि किंचित्पुण्यं द्वारं प्रकल्प्य तद्द्वारा तादृशकर्मविशेषप्राप्यो मोक्ष इति कल्पना स्यात् । नतु तादृशी श्रुतिः क्वचिदपि दृश्यते । महर्षिजैमिनिनापि तादृशी श्रुतिर्नोपलब्धा । इतरथा हि 'स स्वर्गः स्यात्सर्वान् प्रत्यविशेषात्' ( जै. सू. ४।३।१३ ) इतिवत् 'स मोक्षः स्यात्सर्वान् प्रत्यविशेषात्' इत्येतादृशं सूत्रं तेन कृतं स्यात् । यतः स्वर्गविषयेऽपि कस्यचित्कदाचिद्विरक्तिः स्यान्न तु मोक्षविषये कस्यचिदपि । किंच कर्मणैवेत्यत्र कर्मपदेन काम्यं कर्म गृहीत्वा तत्र तन्मोक्षसाधनत्वेनोक्तमिति निश्चित्य तद्बलाद्गीता तादृशकर्मपरेति वक्तव्यम् । तच्च 'मा कर्मफलहेतुर्भूः' ( गी. २।४७ ) इति गीतावचनेनैव विरुध्यते । किंच येन जीवविशेषेण मोक्षसाधनीभूतं कर्मानुष्ठितं तेनैव प्राप्यस्तत्फलीभूतो मोक्ष इति मोक्षावस्थायामपि द्वैतमवर्जनीयमेव भवेत् । तथा च मोक्षस्वरूपमेव भज्येत । अद्वैतमेव हि तत्त्वे श्रुत्यभिप्रेतमिति प्राङ् निरूपितमेव । किंच कर्मणैवेत्यत्र काम्यकर्मणो ग्रहणे

'धातुदोषः कायमलः कामना स्यान्मनोमलः'

इत्युक्तरीत्या चित्तशुद्धिर्नैव संभवतीति कथं ते तामन्तरेण मोक्षं प्राप्तुं शक्नुयुः । तथा चात्र काम्यं कर्म ग्रहीतुं न शक्यते । नैमित्तिकं कर्म तु निमित्तानन्तरभावि । मूलनक्षत्रादौ प्रसवे जननशान्त्यादिवत् । तत्र निमित्तं दुष्कृतविशेषश्चेत्तन्नैमित्तिकं कर्म तं विनाशयति, सुकृतविशेषश्चेत्तं पोषयति । नैतावता स्वातन्त्र्येण

त्किमपि फलं दातुं प्रभवति। अतोऽत्र कर्मणेति पदेन नैमित्तिकं कर्म ग्रहीतुं न शक्यते। अवशिष्टं नित्यं कर्म। किंतु तदपि स्वातन्त्र्येण किमपि फलं दातुं न शक्नोति। कुतो मोक्षस्तस्मात्प्राप्यः स्यात्। नित्यं कर्म हि स्ववर्णाश्रमधर्मानुसारेणावश्यमिदानीमेतत्कर्म कर्तव्यमिति बुद्ध्यैव केवलं किंचिदपि फलमननुसंधायैव क्रियते। तेन च कर्मणा 'स्वधर्मतत्परोऽयम्' इति ज्ञात्वेश्वरः प्रीतो भवति। प्रीतश्चेश्वरस्तस्य पूर्वसंचितकर्मानुसारेण तदनुगुणं फलं ददाति। संचितं कर्म न चेत्स मुक्तो भवति। एवंप्रकारेण जनकादयोऽपि मुक्ता अभूवन्श्चेदस्तु नाम। किंतु तेषां तादृशरीत्या मोक्षप्राप्तौ कर्मणः करणत्वेन नैवोपयोगो दृश्यते येन कर्मणेति तृतीयाया उपपत्तिः स्यात्। अथ प्रतिबन्धकाभावसंपादनद्वारा नित्यस्य कर्मणो मोक्षसाधनत्वं स्यात्। यथा—

प्रातः सदैवं हेमन्तेऽधीयते वटवोऽग्निना।

इत्यत्राध्ययनप्रतिबन्धकस्य शैत्यस्यापनयनं कुर्वतोऽग्नेरध्ययनसाधनत्वं तद्वदिति चेत्—तदपि न। यथा हिममध्ययनप्रतिबन्धकं तथाऽत्र काम्यं कर्म मोक्षप्रतिबन्धकम्। तत्र यथाऽग्निना हिमं दूरी क्रियते न तथाऽत्र नित्यकर्मणा काम्यं कर्म दूरी क्रियते। नित्यं कर्म कुर्वतामेव काम्ये कर्मणि प्रवृत्तिदर्शनात्। तथा चात्र कर्मणो मोक्षसाधनत्वमङ्गीकुर्वताऽपि 'कर्मणैव हि संसिद्धिम्', इत्यत्र कर्मणेति तृतीया सहशब्दमध्याहृत्य तद्योगेऽगत्याऽभ्युपगन्तव्या। सहशब्दश्च विद्यमानवाची।

'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'

इतिवत्। विद्यमानेष्वपि दशसु पुत्रेषु तस्या भारवाहकत्वमपरिवर्जनीयमेवेति तत्तात्पर्यम्। तथा च गीताया भवदभिप्रेतकर्मपरत्वे कर्मणैव हि संसिद्धिमिति वचनं न प्रमाणमिति सिद्धम्।

किंच कर्मणैव हि संसिद्धिमास्थिता जनकादयः (गी० ३। २०) इति गीतावचने कर्म संसिद्धिप्राप्तिश्चेति द्वावर्थौ निर्दिश्य तयोः कार्यकारणभावसंबन्धस्तृतीयया प्रदर्शित इति भवान्मन्यते तत्तु गीतावचनेनैव विरुध्यते। तथा हि—अष्टादशाध्याये स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः(गी० १८।४५) स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः (गी० १८। ४६) इत्युभयत्रापि कर्म संसिद्धिप्राप्तिश्चेति द्वावप्यर्थौ निर्दिष्टौ। किंतु तयोः कार्यकारणभावसंबन्धस्तत्र न प्रदर्शितः। न केवलमेतावदेव किंतु प्रत्युत तयोः कीदृशः संबन्धस्तं प्रदर्शयामीति—

दिदेहे सत्यत्वस्वीयत्वादिप्रतीत्यभावो विषादश्च यः शस्त्रग्रहणप्रवृत्तिश्चाभूत्। ईदृशं च महदन्तरं कायपरिशुद्धिं विना दुर्लभमेव । मोहनाशेन च कायपरिशुद्धिर्भवति । स मोहनाश एव चार्जुनेन नष्टो मोह इति स्वोक्त्याऽऽविष्कृतः । मोहः—भावरूपाज्ञानविषयकमज्ञानम् । तादृशाज्ञाननाशादेव च स्मृतिर्लब्धा । यतोऽज्ञानकृतावरणादेव जन्मान्तरीयस्मरणं न भवति । अज्ञाननाशादेव च जन्मान्तरीयार्थस्मरणे संजाते देहस्य प्रतिजन्म पृथक्त्वेऽप्यात्मैको नित्य एव, भीष्मविनाशायैव च शिखण्डयुत्पत्तिः, द्रोणाचार्यविनाशायैव च धृष्टद्युम्नोत्पत्तिरित्यादिकं सर्वं साधारण्येन ज्ञातमभूत् । अत एव च तदानीमर्जुनो गतसंदेहोऽभूत् । यद्यप्येते न पश्यन्ति० ( गी० १ । ३८ ) कथं भीष्ममहम्० ( गी० २ । ४ ) इत्येवं या विविधाः कल्पना अर्जुनस्य मनसि पूर्वं प्रादुरभूवंस्ताः सर्वा अज्ञानमूलिकाः समूलं नष्टाः । अत एव च करिष्ये वचनं तवेत्येवमर्जुनेनोक्तम् । युध्यस्वेति भगवतो यद्वचनं तत्करिष्य इत्यर्थः ।

अत्र केचिदाधुनिकाः प्राज्ञंमन्या ' गीता कर्मपरा ' इति वदन्ति । तेषामयमाशयोऽवगम्यते । गीतायां ' कुरु कर्माणि ' ( २।४८ ) नियतं कुरु कर्म त्वम् ( ३ । ८ ) कुरु कर्मैव ( ४ । १५ ) तस्माद्युध्यस्व ( २ । १८ ) युध्यस्व विगतज्वरः ( ३ । ३० ) युध्यस्व जेतासि ( ११ । ३४ ) इत्येवं सामान्यरूपेण विशेषरूपेण च कर्मविधानं दृश्यते । गीता च वेदान्तशास्त्रीयग्रन्थेषु प्राधान्येन गण्यते। तथा च तत्र विहितं कर्म साक्षान्मोक्षसाधनं भवति । वेदान्तशास्त्रीयग्रन्था हि सर्वे मोक्षतत्साधनपरा इति प्रसिद्धमेवेति ।

अत्रैवमुच्यते। यद्यप्यर्जुनो मुमुक्षुः स्याद्भगवांश्च तस्याऽऽत्मज्ञानोपदेशं कर्तुं प्रभवेत्तथाऽपि न तदुद्देशेन तदानीं भगवतः प्रवृत्तिः । तथा च वेदान्तशास्त्रीयग्रन्थविशेषप्रणयने कर्तुर्नैवोद्देशः। किंतु युद्धारम्भे पुरतो भीष्मादीन्स्वकीयान्दृष्ट्वा विषण्णचेतसो न्यस्तशस्त्रस्यार्जुनस्य पुनर्युद्धे प्रवृत्तिं साधयितुं तदानीं भगवतः प्रवृत्तिः। सा चार्जुनस्य प्रवृत्तिर्भगवता तस्य कायपरिशुद्ध्यर्थमावश्यकेन साधनचतुष्टयप्रदर्शनेन संपादिता । एवं कारणान्तरेण साधनचतुष्टयसंपन्नस्याऽऽर्जुनस्याऽऽनुषङ्गिक एव संप्राप्त आत्मज्ञानोपदेशाधिकारः। तथा चोक्तं भगवता 'उपदेक्ष्यन्ति ते ज्ञानम्' ( गी० ४।३४ ) इति । एवमनया गीतया संप्राप्ता याऽऽनुषङ्गिक्यात्मविज्ञानोपदेशाधिकारसंपत्तिस्तद्द्वाराऽस्या गीताया आत्मविज्ञानसंबन्धसत्त्वेनास्या वेदान्तशास्त्रीयग्रन्थेषु गणनाऽभूत् । नन्वेवमस्त्वस्या वेदाशास्त्रीय-

ग्रन्थेषु गणना। तेष्वस्याः प्रामुख्यं कुत इति चेत्—उच्यते। मोक्षबन्धौ हि मिथः प्रतिद्वंद्विनौ। बन्धश्च कर्मणा भवति। कर्मणा बध्यते जन्तुरिति ह्यभियुक्तोक्तिः। कर्म च पुण्यपापद्वारा बन्धकं भवति। तथा च ये शुद्धसात्त्विकास्ते पुण्यपापजनकं कर्म त्यक्त्वा केवलं नित्यं कर्म कुर्वाणा अधिकारिणो ब्रह्मसूत्रोपनिषत्प्रदर्शितमार्गेण कृतकृत्या भवन्ति। परं त्वेतादृशा अग्रिमप्रस्थानद्वयावलम्बिनोऽतीव स्वल्पा जना भूयांसस्त्वनादिकालमारभ्य तादृशे कर्मण्यासक्ता अभ्यासवशाच्च संजाततदनुगुणसंस्कारा बन्धकमपि कर्म त्यक्तुं न शक्नुवन्ति। अतस्तेषां सुलभ उपायः कश्चिदावश्यकः। स च गीतया प्रदर्शितः। यथा—

रोगीत्ययं माणवको बन्धुभिर्नापसार्यते।
प्रयत्नः क्रियते किंतु रोगमात्रापसारणे॥

तथा बन्धकमिति ज्ञात्वाऽपि यदि कर्म त्यक्तुं न शक्यते तर्हि मा नाम त्यज्यताम्। किंतु तादृशकर्मगतदोषमात्रापसारणे यत्नः क्रियताम्। स च यत्नः—

बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि। (२।३९)
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय॥ (२।४८)
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥ (३।३९)

इत्येतादृशो गीतायां प्रदर्शितः। तथा च कर्म कर्तुं निसर्गत एव प्रवृत्तिश्चेदस्तु। कर्मकर्तृत्वरूपो यः कर्मसङ्गस्तं दोषं त्यक्त्वा कामं क्रियतां कर्मेत्येवं कर्मत्यागापेक्षया सुलभेनोपायेन भूयसां सांसारिकाणां जनानामुपकारिणीयं गीता प्रामुख्यं लेभे। ब्रह्मसूत्रप्रदर्शितश्रुत्यर्थविचारभूमिकां च तान्सांसारिकाञ्जनान्प्रापयन्ती प्रथमं प्रस्थानमिति प्रतीतिं च लेभे। तथा चानया गीतया प्रदर्शितो यो निष्कामकर्ममार्गः स किं मोक्षसाधनमित्युपयुज्यतेऽथवा मोक्षसाधनीभूतात्मज्ञानोपदेशाधिकारसिद्धय उपयुज्यत इति संशये तत्र निश्चयोऽस्या वेदान्तग्रन्थेषु प्रामुख्येण प्रवेशान्नैव कर्तुं शक्यते। निश्चयादनन्तरभावी प्रवेश इति स पूर्वभाविनिश्चयस्य कारणं नैव भवितुमर्हति। प्रत्युत मोक्षसाधनीभूतात्मज्ञानोपदेशाधिकारसिद्धिद्वारैव तस्या मोक्ष उपयोग इति

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' (गी. ४।३४)

इति भगवदुक्त्यैव ज्ञायते। तथा च गीता कर्मपरेत्युक्तिरभिनिवेशमूलिका नतु युक्तियुक्तेत्यास्तां तावत्।

'स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु (गी० १८।४५)
इत्येवं प्रतिज्ञाय ततः–

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ( गी० १८।४६ )

इत्युक्तम् । तत्र जगदुत्पादको जगद्व्यापकश्च यः परमेश्वरस्तदभ्यर्चनेन सह कर्मणः साक्षात्कार्यकारणभावसंबन्धं स्वकर्मणेति तृतीयया प्रदर्श्य तद्द्वारा संसिद्धिप्राप्त्या सह कर्मणः परम्परया संबन्धः स्पष्ट एवोक्तः । परमेश्वराभ्यर्चनं च परमेश्वरप्रीतिसंपादकं कर्म । परमेश्वरश्च जगदुत्पादकत्वाज्जगद्व्यापकत्वाच्च 'अयं पूर्वसंचितेनामुकेन कर्मणाऽस्यां योनौ समुत्पन्नः, अस्यायं वर्णः' अयं चाऽऽश्रमः, एतच्चास्य स्वधर्मोचितं कर्म, इत्यादिकं सर्वं सर्वजीवसंबन्धेन भावयति । भावनानुरूपं च कर्माऽऽचरयन् परमेश्वरस्तत्र प्रीतो भवतीति युक्तमेव । अत एवोचितं कर्म कृत्वा तदन्ते 'श्रीकृष्णार्पणमस्तु, अनेन कर्मणा श्रीपरमेश्वरः प्रीयताम्' इत्यादिकं विपश्चिद्भिरुच्यमानं दृश्यते । प्रीतश्च परमेश्वरो जीवेनासंकल्पितं संकल्पितं वा तदिष्टं फलं ददातीति योग्यमेव । इष्टफलप्राप्त्यैव च 'सिद्धिं विन्दति मानवः' इत्युच्यते । तथा च योऽयं जीवकृतस्वकर्मणः संसिद्धिप्राप्तेश्च संबन्धोऽत्र स्पष्टमुक्तस्तं संबन्धमत्यजतैव 'कर्मणैव संसिद्धिम्' इत्यस्यार्थो वक्तव्य इति नैव तद्वचनात्कर्मणः साक्षान्मोक्षसाधनत्वं सिध्यति ।

किंच कर्मणो मोक्षसाधनत्वं मन्वानैरपि ज्ञानस्य मोक्षसाधनत्वं नैव निराक्रियते । तस्य समेवं विद्वानमृत इह भवति, ज्ञानादेव तु कैवल्यम्, इत्यादिश्रुत्या सिद्धत्वात् । न च नान्यः पन्था अयनाय विद्यत इति श्रुत्या कर्मणो मोक्षसाधनत्वं निषिध्यत इति वाच्यम् । तया श्रुत्या ज्ञानव्यतिरेकेण स्वातन्त्र्येण कर्मणो मोक्षसाधनत्वं व्यवच्छिद्यते न तु ज्ञानसहकारितया । तथा तु कर्मणो मोक्षसाधनत्वमिष्यत एवेति ते वदन्ति । किंतु तत्रैवमुच्यते । ज्ञानाद्या मोक्षप्राप्तिः सा केवलं ज्ञानस्वरूपमवलम्ब्यैव जायतेऽथवा मध्ये किंचित्क्रियादिद्वारा । आद्यः कल्पः स्वी क्रियते । यथा दीपः स्वसत्तयैव केवलमन्धकारं निवर्तयति तद्वत् । किंतु तत्र कर्मणः सहायता न संभवति । तैलं वर्तिका चेत्यादयोऽप्यासु नैव दीपसहायाः किंतु दीपजनकाः । तथा च कर्म चित्तशुद्धिद्वारा ज्ञानजनकं भवेन्न तु ज्ञानसहायम् । मध्ये किंचित्क्रियादि-

द्वारा ज्ञानान्मोक्षप्राप्तिरित्येवमन्यः कल्पस्त्वसंभवादेव निरस्तः । अज्ञानमेव हि मोक्षप्रतिबन्धकम् । तस्य च ज्ञानसमकालमेव निवृत्तिसंभवात् । किंच ज्ञानात्पूर्वकालिकं कर्म ज्ञानस्य मोक्षजनने सहायतामापद्यते ज्ञानोत्तरकालिकं वा । ज्ञानात्पूर्वभावि कर्मापि कायपरिशुद्धेः पूर्वं कृतं तदुत्तरं वा । तत्राऽऽत्मज्ञानाद्यस्य मोक्षस्तेनैव कृतं कर्म तादृशमोक्षप्राप्तौ सहायं भवतीति वक्तव्यम् । तत्र ज्ञानोत्तरं यत्कर्म तत्कर्तृत्वं तस्य नास्ति । ज्ञानात्पूर्वं च कायपरिशुद्ध्यनन्तरं यत्कर्म भवति तत्राप्यहंकाराभावेन तस्येदं कर्म, इति वक्तुं न शक्यते । किंच तदानींतनं कर्म, उत्पन्नविनष्टं तत्कथं ज्ञाने सहायतां भजेत् । कर्तृत्वासङ्गभावात्तादृशं कर्मादृष्टं जनयितुं न प्रभवति यद्द्वारा तत्कर्म ज्ञानस्य सहायतां भजेत् । किंचोत्पन्नस्यादृष्टस्याऽऽत्मज्ञानेन विनाशे कथं तत्सहायं भवेत् । तदुक्तं ब्रह्मसूत्रकारैः—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः पाते तु ( ब्र० सू० ४ । १ । १३—१४ ) इति । एतेन कायपरिशुद्धेः प्राक्तनस्य कर्मणोऽपि ज्ञानसहायता निरस्ता वेदितव्या ।

किंच ज्ञानकर्मणोः सामानाधिकरण्यमेव न संभवति । तत्कुतस्तयोरेकस्यापरेण सहायं स्यात् । भेदप्रतीतौ सत्यामेव हि कर्म भवति । भेदप्रतीत्यभाव एव च ज्ञानस्य समुदयः ।

किंच देवदत्तेन कृतस्य कर्मणः फलं देवदत्तस्यैव दृश्यते नत्वन्यस्य कस्यापि । तथा च तादृशनियमसंरक्षणाय ' यदुपाधिकस्य कर्म तत्फलं तदुपाधिकस्यैव भवति ' इत्ययं नियमोऽवश्यं स्वीकार्यः । प्रत्यासत्तिमूलकश्चायं नियमः । अनयैव रीत्या यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः ( म० भा० ७ । २ । १५ ) इति महाभाष्य उक्तम् । तथा चाऽऽत्मज्ञानेनोपाधिविनाशे ततस्तस्य तदुपाधिकत्वं नास्तीति कथं तत्कर्म सहायकं कुर्यात् । किंच शास्त्रफलं प्रयोक्तरीति मीमांसकानां नियमः । युक्तश्चायं नियमः । प्रत्यासत्तिमूलकत्वात् । तथा च पात्रस्थं जलं पात्ररहितं नद्यादौ प्रक्षिप्तं चेत्तदस्तत्र नद्यामिदमेव पूर्वं पात्रस्थमासीदिति पार्थक्येन ज्ञातुं न शक्यते । तथाऽत्राऽऽत्मसाक्षात्कारोत्तरं कर्मप्रयोक्ताऽयमेवेति पार्थक्येन प्रतीतिर्नास्तीति तदानीं कथं पूर्वकृतं कर्म, उपयुक्तं भवेत् ।

यच्च साक्षान्मोक्षसाधनीभूतकर्मपरत्वं गीताया मन्वानैरुक्तम्—साक्षान्मोक्षसाधनमप्युक्तमिति श्रुतित एव निर्णेयं भवति । श्रुतिर्हि प्रमाणमूर्धन्यभूता । श्रुतौ च कर्मकाण्डभागो भूयान्दृश्यते । संहिता ब्राह्मणमारण्यकं चेति त्रिविधेष्वपि वेदभा०

गेषु बाहुल्येन कर्मैव वर्ण्यते। ज्ञानकाण्डभागस्तूपनिषद्रूपस्तत्र कर्मकाण्डापेक्षयाऽतीव स्वल्पतरः। तथा च मोक्षो यः परमः पुरुषार्थस्तत्साधनमुपादिशन्त्या [श्रुत्या] भूयसा भागेन यद्वर्णितं तदेव मोक्षसाधनं स्यादित्यनुमानं साधारणोऽपि जनः कर्तुं शक्नोति। तत्रैवमुच्यते—

स्वरूपतो नैव यस्य वस्तुनः स्यात्तु संभवः।
केवलेनानुमानेन तस्य सिद्धिः कथं भवेत्॥
केवलाद्वचनाच्चापि नैव तद्वस्तु सिध्यति।
वचनं तत्र गौणार्थतया प्रत्युत योज्यते॥
आदित्यो यूप इत्यस्य वेदस्यापीदृशी गतिः।

श्रुतौ हि ज्ञानस्य मोक्षसाधनत्वं स्पष्टमेवोक्तम्। युज्यते च तत्। कर्मणश्च ज्ञानसामानाधिकरण्यमेव न संभवति दूर एव ज्ञानसमुच्चयेन मोक्षसाधनत्वम्। तथा च मोक्षसानत्वं कर्मणः स्वरूपत एव न संभवतीति तत्र प्रमाणत्वेन प्रदर्शितमनुमानमाभासो भवति। एवं गीताया मोक्षसाधनीभूतकर्मपरत्वे यानि यानि प्रमाणानि प्रतीयन्ते ते सर्वे प्रमाणाभासा एव युक्तयश्च युक्त्याभासा एव।

कथं तर्हि विचारशीलैः प्रेक्षावद्भिर्गीतायास्तादृशकर्मपरत्वमभ्युपेतमिति चेत्—उच्यते।

यत्र मार्गा अनेके स्युस्तत्रौचित्यविचारणा।
एक एव प्रतीतश्चेत्स एव स्वीकृतो भवेत्॥

इति हि जनानां साधारणी प्रवृत्तिः। तथा च विचारशीलानां कुशाग्रधिषणानामपि यदि येन केनचित्कारणेन कस्मिंश्चिद्विषयविशेषे बुद्धिरभिनिविष्टा स्याच्चेत्तर्हि विचारं कर्तुं प्रवृत्तानामपि तेषां विचारद्वाराणि सर्वतो नोद्घाटितानि भवन्ति। किंत्वभीप्सितविषयस्य प्रामाण्यं युक्तिसहत्वं संभावयतां तदनुगुणमेव विचारद्वारमुद्घाटितं भवतीति ते प्रमाणाभासानपि प्रमाणत्वेन युक्त्याभासानपि युक्तित्वेनाऽऽलोचयन्ति। तथा च यथा—

काचावृतप्रदीपस्य प्रसरन्ती बहिः प्रभा।
असितत्वे दीपतन्वाऽपि वर्णे काचानुसारिणी॥

तथा— आग्रहाक्रान्तचित्तस्य प्रसरन्ती बहिर्मतिः।
गृहीतार्थानुगुण्येन तद्दिशैव प्रधावति॥

तथा चोक्तमभियुक्तैः—आग्रही बत निनीषति युक्तिं तत्र, यत्र मतिरस्य निविष्टा।

पक्षपातरहितस्य तु युक्तिर्यत्र, तत्र मतिरेति निवेशम् ॥ इति ।

एतदर्थकं वचनान्तरमपि दृश्यते—

आग्रही निश्चितमतिस्तदर्थं युक्तिमीक्षते ।

युक्तिं समीक्ष्य प्रेक्षावान्निश्चिनोति स्विकां मतिम् ॥ इति ।

युक्तिमूलको ह्याग्रहो नत्वाग्रहमूलिका युक्तिरिति तत्तात्पर्यम् । ननु तर्हि 'कर्म, मोक्षसाधनम्, मोक्षमार्गोपदेशार्थं प्रवृत्तायां श्रुतौ भूयसा भागेन कर्मवर्णनात्' इत्यनुमानं कथमाभास इति चेत्—उच्यते । यत्र यो मुख्योंऽशस्तस्य वर्णनं भूयसा भागेन कर्तव्यमिति न नियमः । किंतु—

उद्दिष्टार्थस्य संसिद्धिर्यया रीत्या प्रजायते ।

रीतिः साऽभ्युपगन्तव्या लाघवादिष्वनादरः ॥

लोके ह्यनेकविधव्यापारसाध्यैककार्यनियुक्तानां बहूनां मध्ये यस्य यत्र सौकर्यं स तादृशव्यापारद्वारोद्दिष्टं कार्यं साधयति । अज्ञातवासैककार्यं साधयितुं किल पाण्डवैर्द्रौपद्या च यस्य यत्सुकरं तदनुष्ठितमिति प्रसिद्धमेव । यद्यपि तैरनुष्ठितं स्वस्वकार्यमनुचितमेव तथाऽप्युद्दिष्टकार्यसाधनैकदृशां तेषामनौचित्येऽनादर एवाभूत् । प्रकृते च सर्वेषां जनानां कल्याणाय ज्ञानमार्गमुपदेष्टुं प्रवृत्ता [श्रुतिः] प्रायः सर्वानेव तादृशोपदेशानधिकारिण आलोच्य तेषामधिकारसाधनाय प्रथमतः कर्म वर्णितवती । किंतु भिन्नरुचिर्हि लोकः क्वचित्कस्यचिन्मतिरिति नैवैकेन कर्मणा सर्वेऽधिकारं संपादयेयुरित्यालक्ष्यानेकविधं कर्म वर्णितम् । तथा हि—

जनाः पञ्चविधाः ( १ ) उत्तमोत्तमा [ २ ] उत्तमा [ ३ ] मध्यमा [४] अधमा [ ५ ] अधमाधमाश्चेति । प्राणिनां हि द्वयी प्रवृत्तिः सुखार्था दुःखनिवृत्त्यर्था च । तत्र येषां नराणां सुखार्था न प्रवृत्तिर्नापि च विशेषतो दुःखनिवृत्त्यर्था । द्वयमप्येतद्भागधेयानुसारेण पूर्वकृतकर्मानुसारेण च यथा भवेत्तथा भवत्विति मतिस्त उत्तमोत्तमाः सत्त्वगुणप्रधानाः । रजस्तमसी तु तत्र भृत्यवदेव स्तो नैव स्वातन्त्र्येण किंचित्कार्यं कुर्वाते । तादृशाश्च जना जन्मान्तर एव संपादितदुरितक्षया उपनिषत्प्रतिपादितेन मार्गेणाऽऽत्मज्ञानं संपादयन्ति । किंतु तादृशा जना अतीव स्वल्पाः (१) । येषां च जनानां न सुखार्था विशेषतः प्रवृत्तिः किंतु दुःखनिवृत्त्यर्थैव विशेषतः प्रवृत्तिः। सुखं च भागधेयानुसारेण पूर्वकृतकर्मानुसारेण

च यथा भवेत्तथा भवत्विति मतिस्त उत्तमाः सत्त्वगुणप्रधानाः । रजोगुणस्तत्सहकारीति पूर्वापेक्षया विशेषः । तमोगुणस्तु भृत्यवदेव । एते च नित्येन नैमित्तिकेन च कर्मणा दुःखनिवृत्त्यर्थं पूर्वसंचितदुरितक्षयं संपादयन्ति । एतादृशा अपि जनाः स्वल्पा एव । किंतु पूर्वापेक्षया लेशतोऽधिकाः स्युः (२)। येषां च जनानां सुखार्था दुःखनिवृत्त्यर्था चेति द्विविधाऽपि विशेषतः प्रवृत्तिस्ते मध्यमा रजोगुणप्रधानाः । सत्त्वगुणस्तत्सहकारी । तमोगुणस्तु भृत्यवत् । एते च नित्येन नैमित्तिकेन च कर्मणा दुःखनिवृत्त्यर्थं दुरितक्षयं संपादयन्ति, काम्येन कर्मणा च सुखं संपादयितुं प्रयतन्ते । एतादृशाश्च पूर्वापेक्षयाऽप्यधिकाः (३) । येषां च विशेषतः प्रवृत्तिः सुखार्थैव । दुःखनिवृत्तिस्तु भागधेयानुसारेण पूर्वकृतकर्मानुसारेण च यथा भवेत्तथा भवत्विति मतिस्तेऽधमास्तमोगुणप्रधानाः । रजोगुणस्तत्सहकारी । सत्त्वगुणस्तु भृत्यवत् । एतेषां च नित्ये नैमित्तिके च कर्मणि प्रवृत्तानामपि विशेषतः प्रवृत्तिः काम्ये कर्मणि दृश्यते । आभिचारिकेऽपि कर्मण्येतेषां नाप्रवृत्तिः । एतादृशाश्च पूर्वापेक्षयाऽप्यधिकाः (४)। ये चाश्रद्धालवः श्रुतिप्रदर्शितं कमपि मार्गं नानुसंदधते ते नास्तिकास्तमोगुणप्रधानाः । रजः सत्त्वं चेति द्वावपि तत्र गुणौ भृत्यवदेव स्तस्तादृशा अधमाधमाः । ईदृशाश्च सांप्रतं कलौ भूयांस एव दृश्यन्ते (५) । अत्र संग्राहकाः श्लोकाः–

सुखप्राप्तिर्दुःखहानिर्द्वयेऽप्यस्मिन्नुदासते ।
मुमुक्षवो विष्टदृशस्ते नरा उत्तमोत्तमाः ॥ १ ॥
यतमाना दुःखहान्यै सुखे तूष्णीमवस्थिताः ।
उत्तमा मनुजाः प्रोक्ता योगिनोऽत्र निदर्शनम् ॥ २ ॥
सुखप्राप्तिर्दुःखहानिर्द्वयमेतच्चिकीर्षवः ।
साम्येन यत्नं कुर्वन्तो मध्यमाः कर्मिणो नराः ॥ ३ ॥
दुःखहानावुदासीनाः सुखाप्तौ कृतबुद्धयः ।
अधमा मनुजाः प्रोक्ताश्चोरा अत्र निदर्शनम् ॥ ४ ॥
विधिं निषेधं चोल्लङ्घ्य यतमाना सुखाप्तये ।
स्वोत्प्रेक्षितेन मार्गेण ते नरा अधमाधमाः ॥ ५ ॥ इति ।

अत्र प्रथमा द्वितीयाश्च सात्त्विकाः । तृतीया राजसाः । चतुर्थाः पञ्चमाश्च तामसा इति बोध्यम् । एषु च पञ्चविधेषु ये प्रथमा उत्तमोत्तमास्तेषामेव केवलमुपनिषत्प्रदर्शितेन मार्गेण श्रेयःप्राप्तिः स्यात् । किंतु तादृशा अतीव

स्वल्पाः। जगति प्रायस्तदपेक्षयोत्तरोत्तरमधिका एव द्वितीयादयो दृश्यन्ते। तेषामात्मज्ञानोपदेशाधिकारसिद्ध्यर्थं कर्मकाण्डं यावद्वर्ण्यतया समुपस्थितं तावद्गत्या वर्णितं किल। एवमुद्दिष्टार्थसिद्ध्यर्थममुख्यार्थस्य विस्तृतावपि न क्षतिः। अधिकारश्च तादृशः कायपरिशुद्धिं विना न संभवतीति तदर्थं कर्मकाण्डं श्रुतावारब्धम्।

ननु कायपरिशुद्धौ मुख्यतश्चित्तशुद्धिर्दृश्यते। तत्र काम्यस्य कर्मणः कथमुपयोगः। प्रत्युत तादृशेन कर्मणा चित्ते कामः संलग्नो भवति। तदुक्तम्—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति।

कामश्च मनसो मल एव। तथा च मलापसारणाय प्रवृत्तया श्रुत्या कथं काम्यं कर्म वर्णितमिति चेत्—उच्यते। अयं हि काम्यकर्मप्रतिपादिकायाः श्रुतेरभिप्रायः। निष्कामकर्मणा चित्तशुद्धिः किल। किंतु कर्मणि प्रयासाधिक्यं दृष्ट्वा येषां कर्मण्येव सामान्यतो न प्रवृत्तिस्तेषामादौ कथमपि कर्मणि प्रवृत्तिः साधनीया। पश्चात्तत्रत्यो मलः कथमपि दूरीकर्तुं शक्यो भवेदिति। एतदुक्तं भवति। कामबन्धनाय श्रुत्याऽयं कश्चिद्विलक्षणः पञ्जरो विनिर्मितः काम्यकर्मकाण्डेन। यथा मूषकादिबन्धनाय पञ्जरः क्रियते तद्वत्। ऋतौ भार्यामुपेयादित्यादयो विधयः काममूषकस्य प्रवेशद्वारं रागतः प्राप्तमेव। न परदारान्गच्छेदित्यादयो निषेधास्तु पञ्जरशलाकाः। यथा पञ्जरे द्वारव्यतिरिक्ते प्रदेशे निर्गमनप्रतिबन्धाय सर्वतो लोहशलाका ग्रथ्यन्ते तद्वत्। रागतः प्रवृत्तस्य प्राणिनो सन्मार्गान्निवर्तनं न सहसा निवृत्त्युपदेशेन साध्यं भवेत्। किंतु प्रवृत्तिसंकोचेनैव। तथा च कर्मणि प्रवृत्त्यर्थमेव श्रुत्या काम्यं कर्म वर्णितम्। तत्र यद्यपि सुखं दुःखानुबन्धीति सुखानुसंधानेन प्रवृत्तेरिव दुःखानुसंधानेन निवृत्तेरपि संभवस्तथाऽपि श्रुत्या तथा नाऽऽलोचितम्। यतः सुखलेशमात्रेणापि जनानां चेतसि कामः प्रादुर्भवति दुःखं च नानुसंधत्ते। तदुक्तम्।

वस्तुनीह सुखसाधनबुद्धिर्दुःखसाधनमपि निसर्गतः।

बाधते खलु समामवरां वा नोत्कटामिति सुखार्थिनां क्रमः॥ इति।

कामश्च पुरतो योऽयं प्रदर्शितः स बालस्य कटुकौषधप्राशनप्रवृत्त्यर्थं पुरःस्थापितशर्कराखण्डवत्। यथा च पञ्जरे यत्किंचिद्भक्ष्यं स्थाप्यते न तस्य जीव-

नोद्देशेन किंतु पञ्जरे तत्प्रवेशायैव । तत्र मुख्यमुद्देश्यं भक्ष्यान्तरान्निवर्तनमेव । तथैव श्रुतौ काम्यकर्मप्रतिपादनस्योद्देश्यं ज्ञेयम् । तदुक्तम्–

पञ्जरे स्थाप्यते भक्ष्यं व्याघ्रादेर्जीवनाय न ।
किंतु भक्ष्याशया तेषां प्रवेशायैव केवलम् ॥
शर्कराखण्डलोभेन बालं पाययते यथा ।
जठरान्तःशुद्धिकामा माता कटुकमौषधम् ॥
तथा स्वर्गादिलोभेन बह्वायासकराण्यपि ।
श्रुतिः कारयते कर्माण्यन्ततश्चित्तशुद्धये ॥
कामाहंकारदम्भाद्या बहवो मनसो मलाः ।
ते सर्वे समनुच्छेद्या विषवल्लीसमुद्भवाः ॥
क्षुद्राः स्थूलाः स्थूलतरा कामा बहुविधाः स्मृताः ।
दूषयन्ति मनोवृत्तिं सुधियामपि सात्त्विकीम् ॥
न केनापि समुच्छेद्याः कामा एकपदेऽखिलाः ।
अतस्तान्क्रमशश्छेत्तुं पन्थाः श्रुत्या प्रदर्शितः ॥
इमं श्रुतेः समुद्देशं कुशाग्रधिषणा विदुः ।
यथाऽपसार्यते लोके कण्टकेनैव कण्टकः ।
तद्वत्कामान्समुच्छेत्तुं प्रवृत्तिर्दृश्यते श्रुतेः ॥
न भस्मलेपः पात्रेषु मलाधिक्याय दीयते ।
किंतु प्राग्दृढसंसृष्टमलध्वंसैकहेतवे ॥
स्वर्गकामो यजेतेति श्रुत्या संप्रेरितो नरः ।
नूनं शिथिलयत्येतामैहिकीं सुखलालसाम् ॥
श्रुत्या स्वर्गादयः कामा मनोवृत्तौ प्रवेशिताः ।
शनैः शनैर्मनोवृत्तिं व्याप्नुवन्तो दिवानिशम् ॥
तथा तत्र स्थापयन्ति स्वीयं पदमनर्गलम् ।
क्षुद्रकामोद्बोधकानां यथा नावसरः क्वचित् ॥
यद्वदन्त्योदकावाप्तिः शत्रूणां प्रतिबध्यते ।
श्रुत्या लौकिककामानां तद्वदुद्बोधकागमः ॥
न कश्चिदपि कामः स्यात्स्थूलः क्षुद्रो निसर्गतः ।
आपेक्षिक्येव सर्वत्र स्थूलता क्षुद्रताऽपि वा ॥

श्रुतिप्रदर्शितपथा प्रवृत्तः श्रद्धया नरः ।
नित्यं स पुरतो दृष्टिर्न कदाऽपि पराङ्मुखः ॥ इति ।

एवं च श्रुतौ कर्मकाण्डे यत्काम्यानां कर्मणां स्वर्गादिकं फलं प्रदर्शितं तन्नैव भोगोद्देशेन प्रदर्शितमपि तु कर्मणि प्रवृत्तिद्वारा तदितरभोगव्यवच्छेदायैव । इतरव्यवच्छेद एव च मुख्यं गूढतरं च श्रुतेस्तात्पर्यम् । ननु ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिना ज्योतिष्टोमे प्रवृत्तस्येतरव्यवच्छेदेऽपि तस्य चित्तं स्वर्गकामनया मलिनं स्यादेव ।

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

इत्युक्तेरिति चेत्—उपभोगेन कामो न शाम्यतीति सत्यमेव । किंत्वनुपभोगेऽपि न शाम्यति ।

न जातु कामः कामानामलाभेनोपशाम्यति ।
भूय एवाभिवर्धेत सुखसंभावनाशया ॥
वार्धक्येऽपि च पुत्रेष्टिं चक्रे दशरथो नृपः ॥ इत्युक्तेः ।

एवमुपभोगेऽनुपभोगेऽपि च कामोपशमाभावः । किंतु कदाचिदुपभोगे प्रवृत्तस्यैव तृप्तस्य कामोपशमो दृश्यते ।

'स्वाद्वप्यन्नं कामयते नैव तृप्तः कथंचन' इत्युक्तेः ।

तथा—'न जिघत्सति पक्वान्नं क्षुधितो विषशङ्कया' इत्युक्तेर्दोषदृष्टिः कामोपशमे हेतुः । दोषदर्शनं च यथा कामानामनुपभोगे केवलं कल्पनामात्रेण जायते तदपेक्षया कामानामुपभोग एवोत्कटं जायते । यतः कामानामनुपभोगे तत्रत्यानां दोषाणां कल्पनामात्रम् । कामानामुपभोगे तु प्रत्यक्षत एव दोषानुभवः । किंचानुपभोगसमये कल्पनामात्रमपि दोषविचारार्थं प्रवृत्तस्यैव भवति । उपभोगसमये तु दोषविचारार्थमप्रवृत्तस्यापि वस्तुतो विद्यमाना दोषाः प्रकटी भवन्त्येव । तदेतत्सर्वमुक्तमभियुक्तैः—

कामोपशमने हेतुर्बलीयान्दोषदर्शनम् ।
यथाऽपरोक्षानुभवाद्दोषाविर्भाव उत्कटः ॥
न तथा कल्पनामात्राज्जायते हीति निर्णयः ।
अत्र श्मशानवैराग्यं सुप्रसिद्धं निदर्शनम् ॥
दृश्यन्त एव संसारेऽस्मिन् दोषा अन्तराऽन्तरा ।

किंतु कार्यमनुत्पाद्य लीयन्ते बुद्बुदा इव ॥
अजातप्रायमेवैतान्नितरां दोषदर्शनम् ।
विद्युल्लतेवचपलस्मात्क्षणमात्रेण लुप्यते ॥
कामस्तत्र पदं धत्ते यत्रार्थप्राप्तिसंभवः ।
विशेषतः पदं धत्ते यत्र तद्भोगसंभवः ।
संप्राप्तकामः कामानामुपभोगेन शाम्यति ॥
स्याद्वाप्यन्नं कामयते नैव तृप्तः कथंचन ।
अप्राप्तकामः कामानामलाभेनोपशाम्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ इति ।

तथा च न यावद्वैराग्यं तावद्भोगापेक्षयोपभोग एव वरमित्यभिसंधाय श्रुतौ काम्यानि कर्माणि विविधजनोपकारार्थं बहूनि प्रतिपादितानि । राजसानां च काम्ये कर्मणि कामाशया यथा शीघ्रं प्रवृत्तिर्न तथा नैमित्तिके कर्मणि । तदपेक्षयाऽपि नित्ये कर्मणि विलम्बेन प्रवृत्तिर्जायते । तथा च तादृशजनानुग्रहाय श्रुतेः काम्यकर्मप्रतिपादने प्रवृत्तिः। सात्त्विकानां तु नित्ये कर्मण्येव प्रथमतः प्रवृत्तिः स्यात् । तथैव राजसानां नित्ये कर्मणि विलम्बेन प्रवृत्तावपि सा तत्र तेषां प्रवृत्तिः स्थिरा भवेत् । यतः सा श्रुतौ विश्वासाधिक्यमूलिका । काम्ये कर्मणि तु क्षणिकविश्वासेन शीघ्रं प्रवृत्तावपि कामप्राप्तौ लेशतोऽपि संशयश्चेदविश्वासेन विपरीतसंभावनया निवृत्तिरपि भवेत् । न तु तत्र स्थैर्यं स्यादिव । तदुक्तम्--

फलप्राप्त्याशया काम्ये यद्यप्याशु प्रवर्तते ।
किंत्वसंभावनाग्रस्तो निवर्तेतापि कर्हिचित् ॥
यस्तु प्रवर्तते लोके विश्वासादेव केवलम् ।
मन्दं प्रवर्तमानोऽपि न निवर्तेत कर्हिचित् ॥ इति ।

सर्वथा कर्मणि मन्दप्रवृत्तिकानां जनानामपि कर्मणि सामीचीन्येन प्रवृत्तिसंपादनाय श्रुतौ काम्यकर्मप्रतिपादनम् । श्रुतिर्हि मातृसहस्रवद्वत्सलैव । तस्या वात्सल्यातिशयः किमु वर्णनीयः । यतो येषां जनानां कर्मणि प्रवृत्तिर्मन्दाऽपि नास्ति तेषां विश्वासोत्पादनाय श्रुत्या कर्मविपाकप्रकरणमारब्धम् । समुत्पन्ने च श्रुतौ विश्वासे कर्मणि प्रवृत्तिः सुलभैव । अयं भावः--नास्ति-कोऽपि कश्चित् स्वस्य स्वेतरेण केनचित्सहैहिकं साधनमान्तरं बुद्धिप्रत्येन्द्रियसामर्थ्यविद्याभ्यासादिकं बाह्यं च स्त्रीपुत्रगेहप्रभ्व्यादिकं सर्वं समं पश्यन्स्वास्मिन्

केवलं दारिद्र्यकृतवैषम्यं पश्यति । कश्चित्स्वशरीरेऽशक्तताकृतं वैषम्यं पश्यति । एवं कश्चित्केनचित्प्रकारेण वैषम्यं पश्यंस्तत्र कारणमीक्षमाण ऐहिकं किंचिदपि कारणमपश्यन्नगत्या जन्मान्तरकृतं किंचित्स्यादिति कल्पयति । तच्च कीदृशं स्यादिति जिज्ञासायामर्थात्कर्मविपाकमनुसंधाति । अनुभूयमानवैषम्यस्यान्यथानुपपत्त्या कर्मविपाकपरवचनेषु श्रद्धा चेतसि प्रविशति । यतश्चैतादृशः प्रयत्नो विश्वासोत्पादनमारभ्य श्रुतेर्दृश्यते ततो वात्सल्यस्य परा काष्ठेयम् । वात्सल्यमूलकमेव च श्रुतौ ज्ञानकाण्डापेक्षया कर्मकाण्डस्य भूयस्त्वम् । तदेवं जनानामनेकविधत्वाच्छ्रेयःप्राप्तिसाधनीभूतेषु यत्र यस्य सौकर्यं स तं मार्गं स्वी करिष्यतीत्यालोच्य तेषां सर्वेषामनुग्रहार्थं श्रुत्याऽनेकविधानि कर्माणि प्रतिपादितानि । सर्वथा कायपरिशुद्धये कामः परिहरणीयः । कामश्च मनोवृत्तिविशेषः । तथा च वृत्तिक्षये न कामोपशमाय यत्नान्तरमास्थेयं भवति । वृत्तिक्षये च जाते मनस एवोपशमो भवति । तथा चोक्तं पञ्चदश्याम्—

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ (प०द० ११।१११) इति ।

वृत्तयश्च सर्वाः प्रायः कायपरिशुद्धिप्रतिकूलाः कामाधीना एव । कामसंपर्केणैव ह्यशुद्धं मनो भवति । तदप्युक्तं तत्रैव—

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंपर्काच्छुद्धं कामविवर्जितम् ॥ (प०द० ११।११६) इति ।

सर्वं हि वस्तुजातं ग्रहीतुं योग्यं मनसा गृह्यते त्यक्तुं योग्यं च मनसा त्यज्यते । कामश्चायं त्यक्तुं योग्योऽपि मनसा दुस्त्यजः । यतोऽनेन मन एवाऽऽक्रान्तम् । तच्च तथाऽऽक्रान्तं यथाऽयं कामोऽन्ततः शत्रुरपि बहिर्मित्रवदेव भाति । शत्रुत्वं चास्य गीतायामुक्तम्—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ( गी० ३ । ३७ ) इति ।

तच्च कामस्य शत्रुत्वं वस्तु तदपि बहिर्न प्रदर्शयति किंतु मित्रवदेव स्वं प्रत्याययति । यदेव वस्तु कामानुगुणं तदेव ग्रहीतुं योग्यमिति मनसा गृह्यते । तथा यद्वस्तु कामप्रतिकूलं तत्त्यक्तुं योग्यमिति मनसा त्यज्यते । रिपुर्हि गृहाद्बहिर्वर्तमानोऽपसारयितुं शक्यो भवति । ननु गृहं प्रविष्टः । अयं कामस्तु न केवलं गृहं प्रविष्ट इत्येव किंतु गृहस्वामिनं स्वात्मसात्कृत्य स्वामिनोऽनिष्टमपि स्वाभीप्सितं साधयत्येव । गृहस्वामी तु वस्तुतस्तत्स्वानिष्टमपि स्वाभीप्सितमेव मन्यते ।

रिपुत्वस्य परा काष्ठेयम् । एतादृशो रिपुश्चात्यन्तं दुर्जेयो भवति । किंचैतादृशस्थले स्वामिनो हितैषिणा केनचिद्यदि तं रिपुं स्वामिनः सकाशात्पृथक्कर्तुं प्रयत्येत तर्ह्यप्ययं पृथक्कर्तुं न शक्यते । तदुक्तम्—

तृणबीजं यथा भूमौ न पार्थक्येन दृश्यते ।
तत एव पृथक्कर्तुं न केनापि प्रभूयते ॥
तद्वदेव निरूढोऽयं कामोऽत्र प्राणिनां हृदि ।
नैव तस्मादपसरेत्प्रयत्नातिशयं विना ॥ इति ।

तथा चात्र कामस्य निःसारणाय प्रयत्नातिशयोऽपेक्ष्यते । शत्रुनिर्दलनार्थं क्रियमाणः प्रयत्नश्च द्विविधः । मार्दवेन क्रियमाणो हठात्क्रियमाणश्चेति । शत्रुनिर्दलनहेतुना क्रियमाणोऽपि तं हेतुमपह्नुत्य यः क्रियते स आद्यः । तमनपह्नुत्यैव यः प्रयुज्यते स द्वितीयः । शत्रुर्दाम्भिकश्चेदाद्यः प्रयोक्तव्यः । सरलश्चेद्द्वितीयः । कामः शत्रुश्च दाम्भिक एव । दाम्भिकत्वं च तस्यानुपदमेव प्रदर्शितम् । तथा च तस्य निर्दलनाय क्रियमाणः प्रयत्नो मार्दवेन कर्तव्यो भवति । जनानां हितैषिण्या श्रुत्या च क ... कृत्वा स्वर्गादीन् कामान् पुरस्कृत्य ... हेतुस्तु प्राक्प्रदर्शित एव । तदुक्तं किरातार्जुनीये—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥ (कि० १।३०) इति । अतः श्रुत्याऽपि मायावित्वं पुरस्कृत्य स्वर्गादयः कामाः प्रदर्शिताः । अत्र चावबोधसौकर्याय कामे सद्बीजरूपकमाम्नातं तत्प्रदर्श्यते—

कामो बीजं मनो भूमिर्विभूतिस्तु हलः स्मृतः ।
उत्कर्षणं मनःस्वास्थ्यं जलं विषयचिन्तनम् ।
यत्नेनाङ्कुरितः कामः पुष्पितो वस्तुलाभतः ।
भोगेन फलितो ध्यातो भोग उत्तेजकः स्मृतः ॥ इति ।

यथा हलेन भूमेरुत्कर्षणे संपादिते तत्र निक्षिप्तं बीजं जलेन युतं सदङ्कुरपुष्प- ... णेन मनसः स्वास्थ्ये संपादिते तत्र ... त्तदर्थप्रयत्नतद्विषयप्राप्तितदुपभोग- ... पुनः कामबीजे कुर्वद्रूपतां प्रस्था- ... सहायभूतं जलं पराधीनं दृश्यते ।

वृष्ट्याद्यधीनत्वात्। अत्र तु जलस्थानीयं विषयचिन्तनं स्वाधीनमेवेति विशेषः। तदेवं कपटपटोर्महारिपोरस्य कामस्य सर्वत्र निर्दलनमावश्यकम्। तत्र यथा कीटादिभिर्बीजे निःसारतामापादिते बीजस्य भर्जने वा तथा वर्षणाभावेन बीजस्य जलसंयोगाभावे वाऽङ्कुरोद्गमो न भवति तथाऽत्र विषयोपभोगे दुःखानुभवश्चेत्तेन कामे निःसारतामापादिते दुःखकल्पनया कामस्य भर्जने वा तथा शमेन विषयाचिन्तनाभावे वा कामस्याङ्कुरोद्गमो न भवति। यथा च क्षेत्रकाठिन्येनाङ्कुरोद्गमायावकाशो न प्राप्यते तथा क्वचिद्दारिद्र्येण विषयोपभोगाय न पर्याप्तिर्भवति। यथा च क्वचिदुद्गतोऽप्यङ्कुरोऽतिवृष्ट्या तिर्यक् पतितः सन्कणिशं धर्तुं न शक्नोति तथा क्वचित्संप्राप्ता अपि केचित् क्षुद्राः कामा मनोराज्येनोपभोगाय न पर्याप्ता भवन्ति। यथा च पूर्णदशापन्नमपि कणिशं क्वचिच्छलभोपद्रवेण शुष्कं भवति तथा क्वचित्संप्राप्ता अपि विषया वैराग्योदयेनोपभोगाय न पर्याप्ता भवन्ति। एवं यथायथं पूर्वकर्मानुसारेण तत्र तत्र कामो दुर्बलो भवति। श्रुत्या चास्य कामस्य निर्दलनायानेक उपाया अनुसंहिताः। तत्र कश्चिदुपायः क्वचिदिष्टकार्यसाधनाय पर्याप्तो भवत्। उपायश्च क्वचित्कामस्यानुद्भवायोपयुक्तो भवति। क्वचिदुद्भूतस्यापि फलाभावायोपयुक्तो भवति। क्वचित्तु सफलस्यापि पुनस्तत्राप्रवृत्तय उपयुक्तो भवति। तत्र विषयज्ञानेन हि कामोद्भवः। ज्ञानं च द्विविधं—परोक्षमपरोक्षं चेति। परस्त्रीसुरामांसादिचिन्तनस्य यो निषेधः शास्त्रेण प्रतिपादितः स तत्र कामस्यानुद्भवाय परोक्षज्ञाननिषेध उक्तः। अयं चात्यन्तसात्त्विकस्थल उपयुज्यते। न नग्नां स्त्रियमीक्षेत, न सुराविक्रयस्थानं गच्छेदित्यादयो निषेधाः प्रत्यक्षज्ञानस्य। एते च निषेधाः सात्त्विकस्थल उपयुज्यन्ते। राजसस्थले त्वेतान्निषेधानुल्लङ्घ्य कामोद्भवे तत्र तत्कार्याभावाय न परदारान् गच्छेन्न सुरां पिबेदित्यादयो निषेधाः शास्त्रे प्रतिपादिताः। क्वचित्तु राजसस्थले रजःप्रधानतामसस्थले च कामः कृतार्थश्चेत्तत्र पुनरप्रवृत्तये प्रायश्चित्तकाण्डं प्रतिपादितं शास्त्रे। प्रायश्चित्तं हि पुनरपराधाभावाय शिक्षाप्रतिपादनम्। तत्र हि दुःखानुभवे सति तत्संस्कारेण पुनर्निषिद्धे कर्मणि न प्रवर्तते। किंच स्वाभाविकी या सत्त्वगुणमूलिका निषिद्धे कर्मण्यप्रवृत्तिस्तदपेक्षयेयं दुःखानुभवपूर्विका निषिद्धे कर्मण्यप्रवृत्तिर्बलीयसी। यतो यावद्दुःखस्मरणं तावत्पर्यन्तं पुनस्तादृशे कर्मण्यप्रवृत्तिः स्थिरैव। यद्यप्यसत्कर्म सत्कर्मापेक्षया निन्द्यमेव तथाऽपि तज्जन्ययोर्भोगयोर्मध्येऽयं विशेषः। सत्कर्मजन्यः सुखानुभवो

भोगः । स च कामरूपं बीजमुत्थापयति । सुखी जनो हि पुनस्तादृशं सुखमिच्छत्येव । असत्कर्मजन्यो दुःखानुभवो भोगः । स च कामरूपं बीजं निवर्तयति । दुःखी जनो हि पुनस्तादृशं दुःखं निवारयितुमेवेच्छति । तदुक्तम्–

विशेषो भोगयोरेव सदसत्कर्मजन्ययोः ।
बीजमुत्थापयत्येको निवर्तयति चापरः ॥ इति ।

अत्रेदं बोध्यम् । यस्य कायपरिशुद्धिः संजाता तस्य सत्कर्मजन्यं सुखमनुभवतोऽपि तत्रावर्जनीयं सुखसमं सुखान्न्यूनं वा दुःखं संभावयतः स तस्य भोगः कामबीजं नोत्थापयति किंतु निवर्तयत्येव । तथा यस्य कायशुद्धियोग्यताऽपि नास्ति तस्यासत्कर्मजन्यं दुःखमनुभवतोऽपि पुनः कामसुखं संभावयतः स तस्य भोगः कामबीजं न निवर्तयति किंतूत्थापयत्येव । तदुक्तम्–

उत्थापको यदि निवर्तकतामुपेयादूर्ध्वं निनीषति तमात्मसुखाभिरामम् ।
उत्थापकत्वमभियाति निवर्तकश्चेत्कीदृश्यधोगतिविरिहान्यविधाभिधेया । इति ।

एवं च पूर्वोक्तप्रकारेण त्रिविधानामपि जनानां सन्मार्गप्रदर्शनं श्रुत्या साधितम् । अत्यन्ततामसानामप्यनुग्रहार्थं कर्मविपाकप्रकरणं शास्त्रे प्रतिपादितमित्यनुपदमेवोक्तम् । यद्यप्येते सर्वे निषेधाः श्रुतिषु नोपलभ्यन्ते किंतु केचिच्छ्रुतिषु केचित्स्मृतिषु केचिच्च पुराणादिषु तथाऽपि ते सर्वेऽपि श्रुतिमूला एव । श्रुतौ सूचिता एव हि निषेधा विषयश्च स्मृतिपुराणेषु स्पष्टमुक्ताः ।

अथ श्रुतिमूलतया स्मृत्यादीनां प्रामाण्यमस्तु श्रुतेस्तु प्रामाण्यं कथं सिध्यतीति चेत्–उच्यते । प्रत्यक्षमूलानि हीतरप्रमाणानि । श्रुतितात्पर्यार्थस्तु क्वचित्प्रत्यक्षसिद्धो भवति क्वचित्स्वस्वप्रत्यक्षसिद्धो न भवति । परंतु क्वचिदप्यस्मत्प्रत्यक्षविरुद्धो नैव दृश्यते । यजमानः प्रस्तर इत्यत्रापि तात्पर्यार्थो नैव प्रत्यक्षविरुद्धः । अतः क्वापि श्रुत्युक्तार्थस्य मिथ्यात्वं प्रत्यक्षात्सिद्धं न भवतीत्यर्थादेव श्रुतेः प्रामाण्यं सिद्धम् । केषांचिच्छ्रुत्युक्तानामर्थानां प्रत्यक्षमूलकत्वेन प्रामाण्ये निश्चिते तदितरेषामपि श्रुत्युक्तानामर्थानां तद्दृष्टान्तेन श्रुत्युक्तत्वसाम्येन प्रामाण्यस्यानुमानप्रमाणसिद्धत्वात् । किंच शब्दप्रमाणवादिना येन केनापि कस्यचिच्छब्दविशेषस्य स्वप्रामाण्यमनवस्थाभियाऽभ्युपेयमेव । तच्च श्रुतेरेव स्वीकार्यं भवति । तत्राप्रामाण्यकारणस्याभावात् । एतच्चर्ग्वेदभाष्यारम्भे भाष्यकारैः स्पष्टमुक्तं तत्तत एवावधार्यम् ।

अत्र केचित्प्रत्यवतिष्ठन्ते–श्रुतिर्न प्रमाणं भवितुमर्हति । यतस्तत्रार्तभविनोऽ-

र्थस्य वर्णनं क्रियमाणं दृश्यते । कर्मणः सकाशात्स्वर्गादिफलप्राप्तिस्तत्रोक्ता। कर्म चोत्पन्नविनष्टमचेतनं च कथं स्वर्गादिफलं दातुं प्रभवेत् । इन्द्रादिदेवतानां हविर्भागश्च देयत्वेन तत्र श्रूयते। स न संभवति। देवतानां तत्रादर्शनात् । किंचानेकदेशेषु युगपत्प्रवृत्तेष्वनेककर्मस्वेक एवेन्द्रः कथं गन्तुं प्रभवेत्। तथा यस्यामृचि यस्या देवताया वर्णनं क्रियते तस्या देवतान्तरे विनियोगः श्रुत्यैव क्रियमाणो दृश्यते। सोऽपि न संभवति । यथैन्द्र्या गार्हपत्यमुपतिष्ठते ( श० श्रौ० सू० ) इति । तथा चोन्मत्तप्रलापवच्छ्रुतिर्न प्रमाणत्वेन स्वीकरणीयेति ।

अत्रोच्यते । श्रुतौ कर्मणां फलानि स्वर्गादीनि निर्दिष्टानि किल। तत्र च फलदाने कर्मणो निर्देशः कर्तृत्वेन क्वापि नैव कृतः। किंतु साधनत्वेन। फलदाता त्वीश्वरश्चेतन एव । उत्पन्नविनष्टमपि च कर्मादृष्टमुत्पाद्य तद्द्वारा साधनं भवति। महिम्नस्तोत्रेऽप्युक्तम्—

क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां
क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते।
अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं
श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः॥ (म० २०) इति।

अतो न काचिदनुपपत्तिः । तथा कर्मसंनिधौ देवानामसंभवो यः प्रतिपादितः सोऽपि नास्ति । न खल्वीश्वरदेहः स्वदेहवत्कल्पयितव्यो भवता। जीवेन परिगृहीतो देहो हि न जीवाधीनः । प्रत्युत जीव एव देहाधीनः। न तथेश्वरदेहः । ईश्वरदेहस्त्वीश्वराधीनः। तत्र देहे यथेच्छं रूपं परिवर्तयितुं शक्नोतीश्वरः। सूक्ष्मं सूक्ष्मतरं स्थूलं महन्महत्तरं वा । तथैवैकमनेकं वा। ततश्चेन्द्राद्या देवताः स्वीयेन सूक्ष्मरूपेण युगपदनेकत्राप्युपस्थातुं शक्नुवन्ति। सूक्ष्मत्वाच्चास्मदादिभिर्न दृश्यन्ते । किंच स्थूलदेहलिङ्गदेहकारणदेहभेदेन त्रिविध एव देहो जीवानाम्। ईश्वरस्य तु तेभ्योऽन्यो मन्त्रमयो देहो विद्यते। मन्त्रमयी देवतेत्युक्तेः। मन्त्रमयो देहोऽप्यनेकविधः। श्रुत्युक्तः स्मृत्युक्तः पुराणोक्तो नाममन्त्रश्चेत्येवं मन्त्राणामनेकविधत्वात्। सोऽपि च प्रत्येकं पुनरनेकविध उच्चारयितृपुरुषभेदात्। अतश्च मन्त्रमयेन देहेनैकस्या एवेन्द्रादिदेवताया युगपदनेकत्र संनिधानं संभवति। तदुक्तम्—

देवता स्यान्मन्त्रमयी शब्दस्तस्याः स्मृता तनुः ।
तत्र प्राणाः सूक्ष्मरूपा निविशन्ते गुरोर्मुखात् ॥
गायत्रीत्वं हि गायत्र्या नाऽऽचार्यादन्यतो भवेत् ।
नैव मूर्तेर्देवतात्वं विना प्राणप्रतिष्ठया ॥
नैव यज्ञोपवीतत्वं तन्तूनां मन्त्रमन्तरा ।
नैव चित्रस्थपतिना भवेन्नारी सुवासिनी ॥
आचार्याद्धैव विदिता विद्या साधिष्ठदायिनी ।
छान्दोग्यश्रुतिरेषाऽत्र तादृशेऽर्थे निदर्शनम् ॥
मन्त्रमय्या देवताया एकस्या अप्यनेकधा ।
प्रादुर्भावः क्रतुशते युगपन्नेव दुर्लभः ॥ इति ।

तदुक्तं पातञ्जले महाभाष्ये—'एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वेष्वङ्गं भवति' इति । तथा मन्त्रे वर्णनमेकस्या देवतायाः । तस्य मन्त्रस्य विनियोगस्तु देवतान्तरविषय आवाहनादौ श्रुत्यैव कृत इति य आक्षेपः सोऽप्यस्थान एव । तथा हि—प्रयोगसमवेतार्थस्मारको मन्त्र इति हि मन्त्रलक्षणम् । तत्र लक्षणेऽर्थस्मारक इत्युक्तं नत्वर्थवाचक इति । वाचक इत्युक्ते स्ववाचकस्य केवलं स्मारकस्य सग्रहो न स्यात् । स्मारक इत्युक्ते तु तेन वाचकस्यापि संग्रहो भवति । वाचकस्यापि वाच्यार्थस्मारकत्वात् । यथा—आसत्येन रजसाऽऽवर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । ( तै० सं० ३ । ४ । ११ )। अत्र भाष्यम्—सविता आदित्यो हिरण्ययेन रथेन आयाति । सुवर्णनिर्मितं रथमारुह्य प्रतिदिनं पूर्वस्यां दिश्यागच्छति । किं कुर्वन्—सत्येन रजसाऽऽवर्तमानः । अमोघेन रञ्जकात्मकेन मण्डलेनोदयास्तमययोर्भ्राम्यन् । तथाऽमृतं देवशरीरं मर्त्यं मनुष्यशरीरं च निवेशयन् स्वस्वकाले प्रकाशेन तत्तल्लोके व्यवहारक्षमं कुर्वन् । तथा भुवना भुवनानि विपश्यन्नवलोकयन्निति । अत्र सवितुः प्रशंसा वाच्योऽर्थः । सवितुरेव चाऽऽवाहनादावयं मन्त्रो विनियुज्यते । यथा वा—बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ( तै० सं० १ । ८ । २२ ) इति । अस्यार्थः—ऋतात्सत्यात्परमात्मनः सकाशात्प्रकर्षेण देवगुरुत्वेनोत्पन्न ऋतप्रजातः । हे ऋतप्रजात बृहस्पते यद्रत्नादिकं द्रविणम्, अर्यः राजा अतिअर्हात् इतरान् अतिक्रम्य स्वयमेवानुभ-

वितुमर्हति । तथा जनेषु द्युमत् क्रतुमच्च यद्विभाति । तत्रामात्यादिषु द्युमत्भूषणादिमत् यज्ञकर्तृषु क्रतुमत् यज्ञसाधनवत् । पुनरपि यद्द्रविणं शवसा बलेन जीवितप्रदानसंपादितसैन्यरूपेण दीदयत् दीप्यते तद्यथोक्तगुणोपेतं चित्रं मणिमुक्तादिरूपं द्रविणमस्मासु धेहि स्थापयेति । अत्र बृहस्पतेः प्रार्थना वाच्योऽर्थः । बृहस्पतेरेव चाऽऽवाहनादावयं मन्त्रो विनियुज्यते । स्मारकमन्त्रस्योदाहरणं तु यत्र मन्त्रगतेन केनापि शब्देनार्थेन वा लिङ्गभूतेन सादृश्यादिसंबन्धेन या देवता स्मर्यते तत्र तस्या देवताया आवाहनादौ स मन्त्र उपयुक्तो भवति । यथा—आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे । ( तै० सं० ३ । २ । ५ ) । अनेन मन्त्रेण हि सोमवल्ली प्रार्थ्यते । किंतु तत्र सोमशब्देन चन्द्रग्रहः स्मृतो भवति । अतश्चन्द्रावाहनादावयं मन्त्रो विनियुक्तो भवति । तस्य मन्त्रस्य ह्ययमर्थो भाष्यकारैः प्रतिपादितः—हे सोम त्वमाप्यायस्व सर्वतो वर्धस्व । ते तव वृष्णियं वीर्यं विश्वतः समेतु सर्वतः संगच्छताम् । त्वमपि वाजस्यान्नस्य संगथे संगमने निमित्तं भव, इति । सोमशब्देन चन्द्रस्य ग्रहणे प्रार्थनाऽपीयं तस्य संभवति वाक्यार्थमुखेनैव । अत ईदृशस्थले नैवासंभवि किंचित् । तथा—उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्त्वयि तन्तुमेतम् ॥ ( तै० सं० ४ । ७।१३ ) । अस्यार्थो भाष्यकारैरित्थमुक्तः—' हे अग्ने त्वमुद्बुध्यस्व । अस्मद्विषये सावधानो भव । एनं यजमानं प्रतिजागृहि । यजमानं प्रतिदिनं सावधानं जागरूकं कुरु । अयं च त्वं च मिलित्वा इष्टापूर्ते श्रौतस्मार्ते कर्मणी संसृजेथां संपादयतम् । हे यजमान त्वां पितरं पितृवत्पालकं युवानं तरुणवत्सशक्तं, पुनः कृण्वन् कुर्वन्नयमग्निस्त्वयि निमित्तभूते सति । एतं तन्तुं यज्ञप्रवाहम् अन्वाताꣳसीत् अनुक्रमेण तनोतु संपादयतु ' इति । अग्नेरुद्बोधनं त्वत्र वाच्योऽर्थः । किंतूद्बोधनगुणेन बुधग्रहः स्मृतो भवति । अतो बुधग्रहस्याऽऽवाहनादावयं मन्त्रो विनियुज्यते । उद्बोधनं हि बुधग्रहस्य विशेषो धर्मः । बुधग्रहो हि स्वभक्तस्वार्चकादीनामिष्टसाधने सदा प्रबुद्ध एवाऽऽस्ते न कदाऽप्युपेक्षते । अत एव तस्य बुध इति नाम । तथा च बुधग्रहस्याऽऽवाहनादावयं मन्त्रो विनियुज्यते । अत्राग्ने इति यत्संबोधनं तत्रत्याग्निशब्दः सिंहो माणवक इतिवद्गौणलक्षणया बुधग्रहार्थको गृह्येत चेद्वाक्यार्थमुखेनैवेयं प्रार्थना बुधग्रहस्य संभवति । अथवा—अग्निशब्दो यौगिकः । अङ्गतीत्यग्निः । अङ्गेर्नलो-

पथ ( उ० सू० ४ । ५० ) इत्युणादिसूत्रेण चौरादिकादङ्किधातोर्निमत्ययः । अग्निर्हि केनापि वस्तुना स्वसंबन्धे जायमाने तत्र किंचिच्चिह्नं करोत्येव । तथैवायं बुधग्रह इति तस्य प्रशंसा । यद्यपि रूढिर्योगप्रतिबन्धिका तथाऽपि वाक्यार्थे प्रतिबन्धं कुर्यान्न व्यङ्ग्येऽर्थे । तथा च व्यङ्ग्यार्थेन बुधग्रहस्य प्रशंसा न निवारिता भवति । एवमिन्द्रप्रतिपादिकया ऋचाऽपीन्दतीति इन्द्र इति परमैश्वर्यवाचकादिन्दधातो रन्प्रत्ययेन साधितेनेन्द्रशब्देनाग्नेरपि प्रतिपादनं संभवति । ऋज्रेन्द्राग्र० ( उ० सू० २ । २९ ) इत्युणादिसूत्रेणेन्द्रशब्दो रन्प्रत्ययान्तो निपातितः । एवं चान्यदेवताप्रतिपादकस्य मन्त्रस्य देवतान्तरे श्रुत्या विनियोगः कृत इति न मन्तव्यम् । प्रत्युत मन्त्राणामनयाऽपि रीत्या विनियोगो भवतीति विनियोगस्य प्रकारविशेषः प्रदर्शितः । यथा— शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु । ( तै० सं० ४ । १ । ११ )। अस्यार्थः—हे पूषन् ते तव शुक्रं शुद्धस्वरूपमन्यत् अनेकप्रकारम् । उदयकाले रक्तवर्णं रूपमन्यत् मध्याह्नकाले श्वेतवर्णं रूपमन्यत् इत्येवमनेकप्रकारत्वम् । तथा ते तव यजतं पूजनमप्यन्यत् अनेकप्रकारम् । प्रातःकाले मित्रस्य चर्षणी धृत० इत्यादिभिर्मन्त्रैः पूज्यसे । मध्याह्ने त्वासत्येनेत्यादिभिः । तथा त्वया निष्पादिते अहनी अपि विषुरूपे नानारूपे । अहःशब्दश्छत्रिन्यायेन रात्रिमप्युपलक्षयति । अहः प्रकाशोपेतं रात्रिस्तमोयुक्तेति नानारूपत्वम् । एवं विविधकार्यकृदपि त्वं द्यौरिवासि । आकाशं यथैकरूपं तद्वत्त्वमपि पक्षपातराहित्यादेकरूपोऽसि । मीयन्ते पदार्था याभिश्चित्तवृत्तिभिस्ताश्चित्तवृत्तयो मायाः । कव्यदानवाचिना च स्वधाशब्देन कृत्स्नमप्यन्नमुपलक्ष्यते । हे स्वधावः अन्नवन् विश्वा हि मायाः सर्वा अप्यन्यदीयचित्तवृत्तीरवसि रक्षसि । हे पूषन् [redacted] कर्मणि ते तव रातिर्दानं भद्रा फलवदस्तु । समीचीनं भवत्वित्यर्थः। अत्र पूषन्निति संबोधनं पुष्णातीति पूषेति यौगिकार्थेन शुक्रशब्देन स्मृतस्य शुक्रग्रहस्यापि संभवति । मन्त्रार्थोऽपि तस्य प्रशंसायै वर्णितो ग्रहाणामतिशयशक्तिमत्त्वेन संगमनीयः । केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ( तै० सं० ७ । ४ । २ ) इति मन्त्रेऽपि केतुशब्देन केतुग्रहः स्मृतो भवति । मन्त्रार्थोऽपि तत्र सामर्थ्यविशेषेण संगतो भवति । अयं मन्त्रार्थः—हे मर्या मनुष्या भवन्तोऽकेतवे ध्वजरहिताय रथाय केतुं कृण्वन् ध्वजं कुर्वन्तु । तथा—अपेशसे सुवर्णालं-

कारसहिताय रथाय पेशः सुवर्णालंकारं कुर्वन्तु। तथा सति हे रथ त्वं समुषद्भिर्ज्वालासदृशैः सुवर्णरश्मिभिः समजायथाः संगतो जातोऽसीति । हे केतो त्वदीयदृष्टिप्रक्षेपमात्रेण सर्वो हि रथः सुसंपन्नो भवतीति व्यङ्ग्योऽर्थः । तेन च केतुग्रहस्य प्रशंसा भवति । अत्र मन्त्रे यथा शुक्रकेत्वादिशब्दैः सार्थकैस्तत्तन्नामकदेवतास्मरणं जायते तथाऽनर्थकैरप्यक्षरैस्तत्तन्नामकदेवतास्मरणमक्षरसादृश्याज्जायते चेत्तत्रापि तादृशदेवताया आवाहनादौ स मन्त्रो विनियोगयोग्यो भवति । लोकेऽपीयं रीतिः प्रसिद्धैव । महाकविना कालिदासेनापि ' पश्यैतच्छकुन्तलावण्यम् ' इति केनचित्प्रयुक्तं यद्वाक्यं तत्रत्यादनर्थकादपि ' शकुन्तला ' इत्यक्षरचतुष्टयात्तन्नामिकाया मातुः स्मरणं भरतस्य जातमित्यर्थो वर्णितः शाकुन्तलनाटके । किंबहुना—अक्षरसादृश्यमपि सर्वांशेन नापेक्ष्यते । किंतु स्मरणपर्याप्तं सादृश्यं चेत्तावताऽपि तस्य मन्त्रस्य तत्र विनियोगयोग्यता प्राप्यते। तेन तत्र तादृशनामगतवर्णमात्रादीनां केषांचिद्व्यत्यये च्युतावपि वा न क्षतिः। यथा—शंनो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ( तै० आ. ४।४२ ) इति मन्त्रस्य शनिग्रहस्याऽऽवाहनादौ विनियोगः। तत्रायं विशेषः—मन्त्रे ' शं नो ' इत्याद्याक्षरद्वयेन शकारनकारघटितत्वाच्छनिरिति पदं स्मर्यते । तेन च पदेन तद्वाच्यस्य शनेः स्मरणं भवति । मन्त्रार्थस्तु—आपो देव्यो नोऽस्माकमभिष्टये पीतयेऽभीष्टाय पानाय शं सुखहेतवो भवन्तु । तथा नोऽस्माकं शंयोः सुखहेतोस्ता आपोऽभिस्रवन्तु सर्वतः प्रवहन्तु, इति । अत्र मन्त्रे शनेरियं प्रार्थना सूचिता भवति । अत्रेदं बोध्यम्—राहुग्रहस्याऽऽवाहनादौ ' कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृत ( तै. आ. ४।४२) अयं मन्त्रो विनियुज्यते । मन्त्रार्थस्तु कस्येयं का ब्रह्मदेवसंबन्धिनी । ऊतीशब्दो रक्षावाची । सदावृधः सदावर्धमानः सखा सखिवत्प्रियतमः चित्रोऽयं यज्ञः नः अस्मान् प्रति ब्रह्मदेवकृतरक्षणेन आभुवत् अभ्यागतः । स च यज्ञः प्रजापतिसंबन्धिन्या विशेषशक्त्या वृतो वर्तते । ब्रह्मदेवेन स्वयिशक्तिविशिष्टं यज्ञं प्राप्य वयं रक्षिता इति यावत् । अयं च वृत्तान्तो राहोर्ज्ञापयितुं योग्यो भवति । हे राहो त्वं दैत्यः सन्नत्र ग्रहयज्ञे हविर्भागं ग्रहीतुं समागतोऽसि । किंत्वयं यज्ञो दैविक्या शक्त्या वृतः। अतोऽत्र तदनुगुणं समाचरेति राहुग्रहो यज्ञकर्त्रा विज्ञाप्यते । तथा च मन्त्रगतेन शब्देनार्थेन वा सादृश्यादिसंबन्धेन केनापि प्रकारान्तरेण वा स्मृताया देवताया आवाहनादौ स मन्त्रो विनियुक्तो भवति । मन्त्रा-

स्मर्तीयमानः प्रार्थनाप्रशंसादिरूपस्तात्पर्यार्थः शक्त्या लक्षणया व्यञ्जनया या स्मृतदेवतां संबध्नात्येवेति बोध्यम् । यथा चाग्निर्मूधा दिवः ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति (तै. सं. ४।४।४)। अस्य मन्त्रस्य भाष्यकारैः कृतोऽयमर्थः—' अयमग्निरादित्यरूपेण दिवः द्युलोकस्य ककुत् उच्छ्रितः मूर्धा शिरःस्थानीयः । पृथिव्याः पतिः । दाहपाकादिकारित्वेन पालकोऽप्ययम् । किंचापां रेतांसि उदककार्याणि स्थावरजङ्गमशरीराणि जाठराग्निरूपेण जिन्वति प्रीणयति ' इति । अत्र च द्युलोकमूर्धत्वेन, पृथिवीपालकत्वेन, शरीरपोषकत्वेन चाग्नेः स्तुतिर्दृश्यते । भौमोऽपि द्युलोकमूर्धा भवति । सूर्यादप्युच्छ्रितत्वात् । पृथिव्याः पालकश्च भवति । पृथिवीपुत्रत्वात् । ग्रहाणां सामर्थ्यविशेषेण शरीरपोषकत्वमपि तत्र संभवति । अत्र च मन्त्रे पृथिवीपालकत्वेनाग्नेः प्रशंसा क्रियमाणा दृश्यते । पृथिवीसंबन्धेन च तत्पुत्रो भौमग्रहः स्मृतो भवति ।

अथावेदमुच्यते । मन्त्रविशेषस्य देवताविशेषे यो विनियोगो दृश्यते तस्येयमुपपत्तिः प्रदर्शिता । किंत्वीदृशः प्रकारः श्रुत्या कुतः स्वीकृतः । तत्तत्कर्मणि विनियुक्तैर्मन्त्रैर्वाच्यार्थविधयैव तत्तदर्थप्रकाशनं सर्वत्र वस्तुतोऽपेक्षितम् । तथा सर्वत्र न दृश्यते । तत्र को हेतुरिति चेत्—उच्यते । प्रत्यक्षव्यवहारापेक्षया परोक्षव्यवहारो देवेभ्योऽधिकं स्वदते । अतस्तथा विनियोग उक्तः । देवानां परोक्षप्रियत्वं च ' परोक्षप्रिया इव हि देवाः ' (तै. आ. २।३।११) इति श्रुत्यैव स्पष्टमुक्तम् । तत्र हि जगत्कारणीभूतः परमात्मा दशहोतृनामकमन्त्राभिमानिदेवतानां शरीराणि सृष्ट्वा तानि जीवात्मना संपद्येयमिति विचार्य, आत्मन्नात्मन्नित्यनेकवारमाहूतवान् । दशमे चाऽऽह्वाने स जीवात्मा हुंकारं ददौ। अतस्तदनुरोधेन तस्य 'दशाहूतः' इत्यन्वर्थं नाम संपन्नम् । तच्च नाम प्रत्यक्षम् । अतस्तत्र नाम्नि वर्णव्यत्ययेन ' दशहोतृ ' इति परोक्षेण नाम्ना समाहूतवन्तः । तस्माद्देवानां परोक्षप्रियत्वं सिध्यतीति श्रुत्यैव स्पष्टमभिहितम् । एवं कश्चित्सप्तम आह्वाने हुंकारं ददौ । कश्चित्षष्ठे, कश्चित्पञ्चमे, कश्चिच्चतुर्थे, तेषां सर्वेषामपि क्रमेण सप्तहोतृ, षड्ढोतृ, पञ्चहोतृ, चतुर्होतृ, इत्येतैः परोक्षैर्नामभिरेव व्यवहारस्तत्राभिहितः । तथा च श्रुतौ भूयान् देवव्यवहारः कथितः। तत्र च परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्च शब्दा बहव उपलभ्यन्ते येषामर्थावबोधाय निघण्टुप्रकरणमारब्धम् । तत्र निरुक्तटीकायां दुर्गाचार्यैरित्थमभिहितम्—त्रिविधा हि शब्दव्यवस्था । प्रत्यक्षवृत्तयः परोक्षवृत्तयोऽतिपरोक्षवृत्तयश्चेति त्रिविधाः शब्दाः ।

तत्रोत्कटक्रियाः प्रत्यक्षवृत्तयः । अन्तर्लीनक्रियाः परोक्षवृत्तयः । अतिपरोक्षवृत्तिषु शब्देष्वेष निर्वचनाभ्युपायः । तस्मात्परोक्षवृत्तितामापाद्य प्रत्यक्षवृत्तिना शब्देन निर्वक्तव्याः। यथा निघण्टव इत्यतिपरोक्षवृत्तिः । निगन्तव इति परोक्षवृत्तिः। निगमयितार इति प्रत्यक्षवृत्तिः । निगमयितारः श्रुत्यर्थज्ञापयितारः । यस्मान्निगमयितार एते शब्दा अतो निगन्तव इति । तत एव च निघण्टव इत्युच्यन्त इति । तस्माद्देवानां परोक्षप्रियत्वं सिद्धम् । परोक्षप्रियत्वादेव च सर्वांशेन सादृश्याभावेऽपि स्मरणपर्याप्तसादृश्यमात्रेण यन्मन्त्रस्थादक्षरसमुदायान्नामस्मरणद्वारा या देवता स्मृता भवति सा देवता तत्र मन्त्रे संनिधत्त इति बोध्यम् । एवं च कर्मप्रतिपादकश्रुतिषु य आक्षेपास्ते निरस्ता वेदितव्याः । श्रुत्यभिप्रायानाकलनमूलत्वात्तेषाम् । अलमनया प्रसक्तानुप्रसक्त्या । प्रकृतमनुसरामः । तदेवं श्रुत्या नराणामनेकविधानां कायपरिशुद्धयेऽनेके मार्गाः प्रतिपादिताः । यस्मै यो रोचते स तेन स्वीकर्तव्यः । तेनैव च मार्गेण तस्य कायपरिशुद्धिर्यथाधिकारं सत्वरं शनैर्वा भवेदेवेति बोध्यम् ।

नन्वात्मविज्ञानोपदेशाधिकारसंपत्तये कायपरिशुद्धिरपेक्षिता किल । अधिकारसंपत्तिश्च मनस एव । तथा च केवलमनःशुद्धयैवालम् । तथा चात्र कारणदेहस्य स्थूलदेहस्य च शुद्धिः किमर्था । तथेन्द्रियदशकं प्राणपञ्चकं मनो बुद्धिश्चेत्येवं सप्तदशात्मके लिङ्गदेहे मनोव्यतिरिक्तानां षोडशपदार्थानां शुद्धिः किमर्थेति चेत्—सत्यम् । यद्यपि चित्तशुद्धिमात्रेणाधिकारसंपत्तिः स्यात्तथाऽपि तादृशी चित्तस्य शुद्धिरेव कायपरिशुद्धयधीना । तत्र केषांचिच्छुद्धिश्चित्तशुद्धेरुत्पत्तिमेव साधयति । केषांचिच्छुद्धिस्तु चित्तशुद्धेः स्थिरतायै समुपयुज्यते । तथा केषांचिच्छुद्धिश्चित्तशुद्धेः कार्यसाधनाय सहायतां प्रतिपद्यते । तथा हि—लिङ्गदेहे वाचन्मनोव्यतिरिक्तः षोडशगणः । तत्र ज्ञानेन्द्रियाणां शुद्धिर्नाम दोषराहित्यम् । दोषश्च तेषां विषयासक्तिः । तेषु च विषयाधीनेषु तैराकृष्टं मनः कथंकारं तत्प्रातिकूल्येन कामं हर्तुं शक्नुयात् । नन्विन्द्रियाणां प्रवर्तकं निवर्तकं वा चित्तमेव । तथा च चित्तेनाप्रेरितानामिन्द्रियाणां कथं विषयैराकर्षणमिति चेन्न । चित्तेनाप्रेरितानामपीन्द्रियाणां पूर्वसंस्कारवशेन विषयसंनिधाने विषयैराकर्षणसंभवात् । इयांस्तु विशेषः । स काममनसां कामानुगुणमनोवृत्तिपूर्वकं विषयसंबन्धः । अकाममनसां च विषयसंबन्धपूर्वकं कामानुगुणा मनोवृत्तिरिति । न चेन्द्रियाणां मनसश्चेत्युभयोः काम-

राहित्येऽपि विषयसंनिधाने पूर्वसंस्कारवशेनेन्द्रियाणां विषयैराकर्षणं पूर्ववत्स्यादिति वाच्यम् । वैषम्यात् । विषयैर्हि संनिहितैरपीन्द्रियगतकाममवलम्ब्यैवेन्द्रियाण्याकृष्यन्ते । इन्द्रियैस्तु स्वगतकाममवलम्ब्यैव मन आकृष्यते । मनसः सकामत्वे तु सोऽपि काम इन्द्रियकृते मन आकर्षण उपयुज्यत इत्यन्यत् । तथा कर्मेन्द्रियाणां प्राणानां च शुद्धिरप्यपेक्षितैव । कर्मेन्द्रियाणां च प्राणाधीनत्वेन तेषां शुद्धिरपि प्राणशुद्ध्यधीनैव । शुद्धिश्च दोषनिर्यातनम् । दोषश्च प्राणादिवायूनां शरीरे योग्यसंचलनाभावः । तेन च कर्मेन्द्रियाणि स्वस्वकार्यं कर्तुं न प्रभवन्ति । तथा सति शुद्धमपि चित्तं विचारं कर्तुं नोत्सहते । अधिकारप्राप्त्यनन्तरं जायमान उपदेश आत्मविचारे पर्यवस्यति । तथा च प्राणानां कर्मेन्द्रियाणां च शुद्ध्यभावे जायमानोऽप्यात्मविज्ञानोपदेशः स्वस्मिन्नेव लीनः स्यान्न तु फलोन्मुखो भवेत् । तथा बुद्धेरपि शुद्धिरपेक्षितैव । बुद्धिरेव हि मनसः कार्यं पूर्णतां संपादयति ।

मनो विमर्शरूपं स्याद्बुद्धिः स्यान्निश्चयात्मिका ( प० द० १ । २० ) इत्युक्तेः । न संकल्पमात्रेण कस्यापि कार्यस्य सिद्धिर्भवति । किंतु निश्चये सत्येव प्रवृत्तिर्वा निवृत्तिर्वा जायमाना दृश्यते । तथा च यथात्मज्ञानोपदेशानन्तरं विचारे संप्रवृत्तेऽपि निश्चयो न भवेत्तर्हि जायमानोऽप्युपदेशो नैष्फल्यमापद्येत । किंच मनोबुद्ध्योः संबन्धदार्ढ्यान्मनः शुद्धं बुद्धिरशुद्धा, विपर्ययेण वा मनोऽशुद्धं बुद्धिः शुद्धेति कल्पद्वयमपि नैव संभवति । एवं लिङ्गदेहघटकानां सर्वेषां शुद्धिरपेक्षिता न तु केवलं मनोमात्रस्य शुद्ध्या निर्वाहो भवतीत्युक्तम् । तथा स्थूलदेहस्य कारणदेहस्य च शुद्धिरप्यपेक्षितैव । तत्र स्थूलदेहः पञ्चीकृतपञ्चमहाभूतात्मकः । तस्य शुद्धिश्च दोषराहित्यम् । स्थूलदेहे दोषश्च तत्र वातपित्तकफानां यावता प्रमाणेनावस्थितिरपेक्ष्यते तदपेक्षया तेषां न्यूनताऽऽधिक्यं वा दोषः । दोषे च सति तत्रावस्थितानां तदधीनस्थितीनां ज्ञानेन्द्रियाणां प्राणानां च स्वस्वकार्यजनने यथोचिता प्रवृत्तिर्न स्यादिति तत्साहाय्यं मनसो न स्यात् ।

स्यादेतत् । स्थूलदेहस्य या शुद्धिस्तदपेक्षा स्यान्नाम चित्तशुद्धेः । परंतु कारणदेहस्य या शुद्धिस्तदपेक्षा सुतरां चित्तशुद्धेर्न संभवति । जगन्मूलभूतं ब्रह्मविषयकं यदज्ञानं तद्रूपो हि कारणदेहः । तस्य दोषश्च तस्य याथातथ्येन जायमानस्य ज्ञानस्याभाव इति प्राक्प्रदर्शितमेव । 'इदमज्ञानम्' इत्येवमज्ञानत्वेन यन्मूलभूताज्ञानविषयकं ज्ञानं तस्याभाव इति यावत् । तादृशज्ञाना-

भावरूपस्य दोषस्य निरासेन हि कारणदेहस्य शुद्धिर्वाच्या। तादृशदोषनिरासश्च मूलभूताज्ञानस्य यदधिष्ठानं तस्य साक्षात्कारेण भवेत् किल। किंतु मूलभूताज्ञानस्याधिष्ठानं ब्रह्मैवेति तत्साक्षात्कारे सति मूलभूताज्ञानं विनष्टमिति तदानीं कारणदेहस्यास्तित्वमेव नास्ति कुतस्तच्छुद्धिः कुतस्तरां तदपेक्षा। तथा तदानीमज्ञानमूलकः सर्व एव प्रपञ्चो विलयं याव इति चित्तमपि नष्टमेव। दूरे तच्छुद्धिः। दूरतरे च तस्याः शुद्धेरन्यापेक्षेति।

अत्रोच्यते। ब्रह्मविषयकाज्ञाने ब्रह्मज्ञानेन विनष्टे कारणदेहो विनष्ट एव भवतीति सत्यमेव। किंतु ब्रह्मज्ञानं द्विविधं—परोक्षं प्रत्यक्षं च। तत्र प्रत्यक्षज्ञानेनाज्ञानं नश्येत्। न हि रज्जुं प्रत्यक्षां ज्ञातवतः सर्पप्रतीतिर्भवति। एतावांस्तु तत्र विशेषः। रज्जुप्रत्यक्षे ज्ञातृज्ञेयज्ञानरूपा त्रिपुटी भासते। ब्रह्मप्रत्यक्षे सर्वथा भेदाभावेन त्रिपुट्यपि न भासते। प्रातिभासिकपदार्थज्ञानाभावस्तूभयत्र समानः। परोक्षज्ञानेन तु नाज्ञानस्य विनाशः। किंतु क्षयोन्मुखत्वम्। एतावती या च तत्राज्ञानरूपस्य कारणदेहस्य शुद्धिः सा तत्र चित्तशुद्धेरपेक्षिता। कारणदेहस्याशुद्धत्वे तत्परिणामभूतस्य चित्तस्य शुद्धिरेव नोदयमासादयेत्। कारणदेहस्य क्षयोन्मुखत्वे सत्येव हि तत्परिणामभूते चित्ते कामः शिथिलसंचारः स्यान्नान्यथा। तथा च तदानीं चित्तशुद्धेः कारणदेहशुद्ध्यपेक्षोपपद्यत एव। तदवस्थमुमुक्षुदृष्ट्या सर्वस्यास्य प्रपञ्चस्य पुरतः प्रतीयमानत्वात्।

अत्रेदं बोध्यम्। यथा नायं सर्प इत्याप्तोपदेशेन निश्चितायामपि रज्जौ यावच्चक्षुर्दोषस्तावत्सर्पः प्रतीयत एव। किंतु तत्रायं प्रातिभासिक इति बुद्धिसत्त्वात्तज्जन्यौ भयकम्पौ निवर्तेते। तदानीं तस्य सर्पस्य भर्जितबीजवत्कार्यकारित्वाभावात्। एतादृश्येव जीवन्मुक्तावस्था। यदि तु नायं सर्प इति केनचिद्वाक्य उच्चारिते श्रोतुस्तत्र वाक्ये न पूर्णो विश्वासो नापि च सुतरामविश्वासस्तर्हि तस्यामवस्थितौ नेत्रदोषेण दृश्यमानात्सर्पाद्भयं कम्पश्चोत्पद्यत एव। विश्वस्तवाक्याद्यथा भयं कम्पश्च नोत्पद्यते तथा तस्यामवस्थायां भयकम्पादिकं नास्त्येवेति वक्तुमशक्यम्। संशयादपि तादृशकार्योत्पत्तिजननात्। तादृशी च या मुमुक्षोरवस्थाऽऽत्मविज्ञानोपदेशात्प्राकन्यविकारसंपत्तिस्तस्यामवस्थितौ या चित्तशुद्धिस्तया कारणदेहशुद्धिरपेक्ष्यत एव। यावती च तदानीं कारणदेहस्य शुद्धिस्तावत्येवापेक्ष्यत इति न कश्चिद्दोषः। तदेवं चित्तमात्रशुद्ध्या न कार्यसिद्धिः किंतु कायपरिशुद्धिरपेक्ष्यत इति प्रदर्शितम्।

अत्रेदं बोध्यम् । कायपरिशुद्धिश्चेयं धार्मिकस्यैव भवति । धार्मिकलक्षणं तु—

देवतागोद्विजादीनां परिचर्यादिकर्मसु ।
व्यापारयति यः कायं स धार्मिक इति स्मृतः ॥
देवतादिप्रशंसायां स्वाध्यायाध्ययने जपे ।
व्यापारयति यो वाचं स धार्मिक इति स्मृतः ॥
संध्योपासनहोमादिविधयो नैव बन्धनम् ।
किंत्वनुग्रह इत्येवं मतिर्यस्य स धार्मिकः ॥ इति ।

एतच्च धार्मिकस्य न पृथग्लक्षणत्रयं मन्तव्यम् । किंतु समुच्चित्यैकमेवेदं धार्मिकलक्षणं बोध्यम् । तदुक्तमभियुक्तैः—

कायेन वाचा मनसा चैव योऽहर्निशं नरैः ।
धर्मप्रवणतामेति स धार्मिक इतीर्यते ॥ इति ।

ननु संध्यादिविधीनामनुग्रहत्वेन ज्ञानं धार्मिकलक्षणे प्रतिपादितम् । किंतु तेभ्यस्तादृशीं बुद्धिमीश्वर एव ददाति ।

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥

इत्युक्तेः । न चेश्वरश्चेत् सर्वसाधारणस्तादृशीं बुद्धिं कुतः सर्वेभ्यो न ददातीति वाच्यम् । यतः साधारणोऽपि दोषशून्योऽपि चेश्वरः कर्मायत्त एव तादृशबुद्धिप्रदाने प्रभवति । तादृशं कर्म च देवतादीनां परिचर्यादिषु कायवाग्व्यापारादिकं बोध्यम् । नच तादृशव्यापारानुगुणाऽपि बुद्धिः परमेश्वरप्रदत्तैव । तथा च तत्र कीदृशकर्मायत्तत्वं परमेश्वरस्येति वाच्यम् । तत्र तत्पूर्वतनकर्मायत्तत्वात् । संसारस्यानादित्वमत्र पार्यन्तिकः समाधिर्बोध्यः । अथ कायपरिशुद्धौ जातायां कार्यसिद्धिः कया विधया भवति तदुच्यते । सर्वो हि जन्तुः सुखार्थं दुःखनिवृत्त्यर्थं च प्रयतत इति प्रसिद्धमेव । यत्र चैकस्मादेव विषयात्सुखं दुःखं च प्राप्यते तत्र प्राणिनां प्रवृत्तिर्वा भवति निवृत्तिर्वा । तत्रायं संसारासक्तानां प्राणिनां क्रमः—

वस्तुनीह सुखसाधनबुद्धिर्दुःखसाधनमतिं निसर्गतः ।
बाधते खलु समामवरां वा नोत्कटामिति सुखार्थिनां क्रमः ॥

यद्वस्तु सुखसाधनं तदेव दुःखसाधनं चेत्तद्वस्तु सुखसाधनत्वाद्ग्राह्यमथवा दुःखसाधनत्वात्त्याज्यमिति विचारे यदि तत्र सुखापेक्षया दुःखं न्यूनमथवा सुखेन समं प्रतीतं भवेत्तर्हि तत्र दुःखसाधनमतेर्बाधो भवति। अतस्तत्र निवृत्तिर्न भवति किंतु तद्ग्रहणे प्रवृत्तिरेव भवति। वस्तुतस्तु—

समत्वमवरत्वं वा यत्रापि ज्ञायते नरैः।
तत्रापि वस्तुतोऽस्त्येव दुःखभारोऽतिदुःसहः॥

इत्युक्तरीत्या प्रायः सर्वत्र सुखापेक्षया दुःखमधिकमेवेति बोध्यम्। ननु सुखापेक्षया दुःखं न्यूनं प्रतीतं चेदस्तु नाम तत्र दुःखसाधनमतेर्बाधात्सुखार्था प्रवृत्तिः। सुखदुःखयोः साम्ये प्रतीते तु कदाचित्सुखार्था प्रवृत्तिः कदाचिद्दुःखनिवृत्त्यर्था निवृत्तिरिति तत्र प्रवृत्तिरेव कथमुच्यत इति चेन्न। संशये निश्चायिका हि बुद्धिः। सा च मलिना कामपरवशा। कामश्च स्वमतिकूलतया वस्तुतो दुःखसाधनतां निह्नुते। तथा च तादृशकामसंपृक्ता बुद्धिर्ग्राह्यत्वेनैव निश्चयमातनुते। किंच यत्रापि सुखापेक्षया वस्तुतोऽधिकं दुःखं तत्रापि कामो यथासंभवं दुःखस्याऽऽधिक्यमपह्नुत्य सुखेन साम्यं न्यूनतां वा प्रदर्शयन् दुःखसाधनमतेर्बाधमेव साधयति। यत्र तु सुखदुःखयोर्महदन्तरं सुखं स्वल्पतरं दुःखं च महत्तरं मृत्युसमं तत्र दुःखस्याऽऽधिक्यमपह्नोतुमशक्नुवन्नगत्या कामस्तत्र तूष्णीमास्ते। यथा—

नान्नं विषेण संपृक्तं क्षुधार्तोऽपि जिघत्सति।

क्वचित्तु तादृशे महदन्तरेऽपि कामः प्राणिनमन्धं कर्तुं प्रभवति। तत्र च स प्राणी सुखलोलुपः सन् कामान्धतया भावि दुःखमपश्यन् तत्र प्रवर्तत एव। तदुक्तम्—

कामान्धः किं न कुर्वीत यत्पाण्डुः काममोहितः।
जानन्नपि स्वकं मृत्युं माद्रया साकमरीरमत्॥ इति।

भाविनो दुःखस्य महत्तरत्वेऽपि निश्चितत्वेऽप्यैहिकत्वेऽपि चैवं कामस्य स्वाराज्यं किमुत भाविनो दुःखस्य स्वल्पत्वे संदिग्धत्वे जन्मान्तरगतत्वे च। तत्र महत्तरमपि दुःखं जन्मान्तरगतं चेत्तत्र व्यवधायकं मरणकालघटितं भूयांसं कालं पुरस्कृत्य ससहाय इव कामस्तत्र तज्जन्मान्तरगतं दुःखं निह्नुत्यैहिकसुखार्थं प्रवर्तयति। प्रायस्तादृशे विषये यथेच्छं कामो नरीनर्ति। केवलं सत्त्वगुणोत्कर्षे सत्येवास्य कामस्य प्रयत्नो निष्फलो भवति। तदुक्तम्—

पराभूतो भवेत्कामः सत्त्वोत्कर्षेण नान्यतः ।
रजोगुणः सहायः स्याद्विरोधी तमोगुणः ॥ इति ।

सत्त्वोत्कर्षश्च कायपरिशुद्धाववश्यंभावीति तत्र कामोऽकिंचित्करो भवति । तथा चाऽऽत्मविज्ञानोपदेशाधिकारः संपद्यते । सति चैवमधिकारसंपत्तौ नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमाद्यदा कदाचित्तस्योपदेष्टाचार्यसंनिधानं स्यादेवेति तेनोपदेशे कृते सति साक्षादात्मसायुज्यमुपैतीति सिद्धम् ।

समर्प्य गौरीरमणे भक्त्यैतं ग्रन्थमादरात् ।
श्रीवासुदेवो जनुषः साफल्यं लब्धुमीहते ॥

इति श्रीमन्महामहोपाध्यायाभ्यंकरोपाह्ववासुदेवशास्त्रिविरचिता
कायपरिशुद्धिः समाप्ता ॥



# कायपरिशुद्धावुद्धृतानां श्रुत्यादीनां वर्णानुक्रमेण सूचीपत्रम् ।

समाप्तमिदं श्रुत्यादिसूचीपत्रम् ॥

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता ।... ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् ।... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् ।... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि ।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—रादीकारामानुजभाष्ययुता । ... ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः ।... ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम् । | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— ,, ,, | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् ।... ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिरिवरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता । धर्मशास्त्रग्रन्थः । | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् ।... | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्रम् । ... ... ... ... | २ | ० |
| १०७ लीलावती—श्रीमद्भास्कराचार्यप्रणीता । टीकाद्वयोपेता द्विभागा । | ३ | ० |
| १०८ व्याकरणमहाभाष्यम्—प्रदीपोद्द्योतयुतं (अङ्ग०)प्र. भा. । | २ | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | ६ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्कः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ५ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ५७ | आचारभूषणम् | ४ | ६ |
| ५८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| १०५ | आश्वलायनगृह्यसूत्रम् | २ | १२ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शां०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवा० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| १०४ | त्रिंशच्छ्लोकी | २ | १५ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| १०६ | दशोपनिषदः | २ | ० |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टू रा०स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ४ |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |